# SRIMANMAHABHARATAM

A NEW EDITION

MAINLY BASED ON

THE SOUTH INDIAN TEXTS,

With footnotes and Readings.

---

## UDYOGAPARVA V.




EDITED BY

T. R. KRISHNACHARYA & T. R. VYASACHARYA,

Proprietors, Madhva Vilas Book Depot, Kumbakonam.





*PRINTED AT THE*

*Javaji Dadaji's "Nirnaya-sagar" Press,*

**BOMBAY.**

---

1907.

॥ श्रीः ॥

# श्रीमन्महाभारतम् ।

## सटिप्पणम् ।



## उद्योगपर्व ५.

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

**टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च**

अनेकेषां विदुषां साहाय्येन दाक्षिणात्यबहुकोशानुसारेण

संशोध्य

मुंबापुर्यां

जावजी दादाजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

शाके १८२८ पराभवनामसंवत्सरे ।

श्रीः ।

# श्रीमन्महाभारतम् ।



## उद्योगपर्व ५ ।

### (अथ सेनोद्योगपर्व ॥ १ ॥)

#### प्रथमोऽध्यायः ॥ १ ॥

विराटसभां प्रविष्टेषु राजसु श्रीकृष्णेन पाण्डववृत्तान्तकथनपूर्वकं धृतराष्ट्रंप्रति दूतप्रेषणनिर्धारणम् ॥ १ ॥

श्रीवेदव्यासाय नमः ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥ १

वैशंपायन उवाच ।

कृत्वा विवाहं तु कुरुप्रवीरा-
स्तदाऽभिमन्योर्मुदिताः सपक्षाः ।
विश्रम्य रात्रावुषसि प्रतीताः
सभां विराटस्य ततोऽभिजग्मुः ॥ १

सभा तु सा मत्स्यपतेः समृद्धा
मणिप्रवेकोत्तमरत्नचित्रा ।
न्यस्तासना माल्यवती सुगन्धा
तामभ्ययुस्ते नरराजवर्याः ॥ २

अथासनान्याविशतां पुरस्ता-
दुभौ विराटद्रुपदौ नरेन्द्रौ ।
वृद्धौ च मान्यौ पृथिवीपतीनां
पित्रा समं रामजनार्दनौ च ॥ ३

पाञ्चालराजस्य समीपतस्तु
शिनिप्रवीरः सहरौहिणेयः ।
मत्स्यस्य राज्ञस्तु सुसन्निकृष्टौ
जनार्दनश्चैव युधिष्ठिरश्च ॥ ४

सुताश्च सर्वे द्रुपदस्य राज्ञो
भीमार्जुनौ माद्रवतीसुतौ च ।
प्रद्युम्नसाम्बौ च युधि प्रवीरौ
विराटपुत्रैश्च सहाभिमन्युः ॥ ५

सर्वे च शूराः पितृभिः समाना
वीर्येण रूपेण बलेन चैव ।
उपाविशन्द्रौपदेयाः कुमाराः
सुवर्णचित्रेषु वरासनेषु ॥ ६

तथोपविष्टेषु महारथेषु
विराजमानाभरणाम्बरेषु ।
रराज सा राजवती समृद्धा
ग्रहैरिव द्यौर्विमलैरुपेता ॥ ७

ततः कथास्ते समवाययुक्ताः
कृत्वा विचित्राः पुरुषप्रवीराः ।
तस्थुर्मुहूर्तं परिचिन्तयन्तः
कृष्णं नृपास्ते समुदीक्षमाणाः ॥ ८

कथान्तमासाद्य च माधवेन
संघट्टिताः पाण्डवकार्यहेतोः ।
ते राजसिंहाः सहिता ह्यशृण्व-
न्वाक्यं महार्थं सुमहोदयं च ॥ ९

श्रीकृष्ण उवाच ।

सर्वैर्भवद्भिर्विदितं यथाऽयं
युधिष्ठिरः सौबलेनाक्षवत्याम् ।

---

प्रतीताः प्रबुद्धाः ॥१॥ आविशतामुपविष्टौ। पित्रा वसुदेवेन ॥ ३ ॥ अक्षवत्यां द्यूतक्रीडायाम् ॥ १० ॥

जितो निकृत्याऽपहृतं च राज्यं
वनप्रवासे समयः कृतश्च ॥ १०
शक्तैर्विजेतुं तरसा महीं च
सत्ये स्थितैः सत्यरथैर्यथावत् ।
पाण्डोः सुतैस्तद्व्रतमुग्ररूपं
वर्षाणि षट् सप्त च चीर्णमग्र्यैः ॥ ११
त्रयोदशश्चैव सुदुस्तरोऽय-
मज्ञायमानैर्भवतां समीपे ।
क्लेशानसह्यान्विविधान्सहद्भि-
र्महात्मभिश्चापि वने निविष्टम् ।
एतैः परप्रेष्यनियोगयुक्तै-
रिच्छद्भिराप्तं स्वकुलेन राज्यम् ॥ १२
एवं गते धर्मसुतस्य राज्ञो
दुर्योधनस्यापि च यद्धितं स्यात् ।
तच्चिन्तयध्वं कुरुपाण्डवानां
धर्म्यं च युक्तं च यशस्करं च ॥ १३
अधर्मयुक्तं न च कामयेत
राज्यं सुराणामपि धर्मराजः ।
धर्मार्थयुक्तं तु महीपतित्वं
ग्रामेऽपि कस्मिंश्चिदयं बुभूषेत् ॥ १४
पित्र्यं हि राज्यं विदितं नृपाणां
यथाऽपकृष्टं धृतराष्ट्रपुत्रैः ।
मिथ्योपचारेण यथा ह्यनेन
कृच्छ्रं महत्प्राप्तमसह्यरूपम् ॥ १५
न चापि पार्थो विजितो रणे तैः
स्वतेजसा धृतराष्ट्रस्य पुत्रैः ।
तथाऽपि राजा सहितः सुहृद्भि-
रभीप्सतेऽनामयमेव तेषाम् ॥ १६
यत्तु स्वयं पाण्डुसुतैर्विजित्य
समाहृतं भूमिपतीन्प्रपीड्य ।
तत्प्रार्थयन्ते पुरुषप्रवीराः
कुन्तीसुता माद्रवतीसुतौ च ॥ १७
बलाभियुक्तैर्विविधैरुपायैः
संप्रार्थिता हन्तुममित्रसङ्घैः ।
राज्यं जिहीर्षद्भिरसद्भिरुग्रैः
सर्वं च तद्वो विदितं यथावत् ॥ १८
तेषां च लोभं प्रसमीक्ष्य वृद्धं
धर्मज्ञतां चापि युधिष्ठिरस्य ।
संबन्धितां चापि समीक्ष्य तेषां
मतिं कुरुध्वं सहिताः पृथक्च ॥ १९
इमे च सत्येऽभिरताः सदैव
तं पालयित्वा समयं यथावत् ।
अतोऽन्यथा तैरुपचर्यमाणा
हन्युः समेतान्धृतराष्ट्रपुत्रान् ॥ २०
तैर्विप्रकारं च निशम्य कार्ये
सुहृज्जनास्तान्परिवारयेयुः ।
युद्धेन बाधेयुरिमांस्तथैवं
तैर्बाध्यमाना युधि तांश्च हन्युः ॥ २१
तथाऽपि नेमेऽल्पतयाऽसमर्था-
स्तेषां जयायेति भवेन्मतिर्वः ।
समेत्य सर्वे सहिताः सुहृद्भि-
स्तेषां विनाशाय यतेयुरेव ॥ २२
दुर्योधनस्यापि मतं यथाव-
न्न ज्ञायते किं नु करिष्यतीति ।
अज्ञायमाने च मते परस्य
मन्त्रस्य पारं कथमभ्युपेमः ॥ २३
तस्मादितो गच्छतु धर्मशीलः
शुचिः कुलीनः पुरुषोऽप्रमत्तः ।
दूतः समर्थः प्रशमाय तेषां
राज्यार्धदानाय युधिष्ठिरस्य ॥ २४
निशम्य वाक्यं तु जनार्दनस्य
धर्मार्थयुक्तं मधुरं समं च ।
समाददे वाक्यमथाग्रजोऽस्य
संपूज्य वाक्यं तदतीव राजन् ॥ २५

॥ इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि प्रथमोऽध्यायः ॥ १ ॥

सत्यं रथवदारोढुं योग्यं येषाम् ॥ ११ ॥ बभूषेत् प्राप्तुमिच्छेत् । तद्भाव आर्षः ॥ १४ ॥ अनामयं कुशलम् ॥ १६ ॥ अतो राज्यार्धप्रदानात् ॥ २० ॥ प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

बलरामेण कृष्णमतानुमोदनपूर्वकं स्वस्य दुर्योधने पक्षपाताविष्करणम् ॥ १ ॥

बलदेव उवाच ।

श्रुतं भवद्भिर्गदपूर्वजस्य
वाक्यं यथा धर्मवदर्थवच्च ।
अजातशत्रोश्च हितं च युक्तं
दुर्योधनस्यापि तथैव राज्ञः ॥ १

अर्धं हि राज्यस्य विसृज्य वीराः
कुन्तीसुतास्तस्य कृते यतन्ते ।
प्रदाय चार्धं धृतराष्ट्रपुत्रः
सुखी सहास्माभिरतीव मोदेत् ॥ २

लब्ध्वा हि राज्यं पुरुषप्रवीराः
सम्यक्प्रवृत्तेषु परेषु चैव ।
ध्रुवं प्रशान्ताः सुखमाविशेयु-
स्तेषां प्रशान्तिश्च हितं प्रजानाम् ॥ ३

दुर्योधनस्यापि मतं च वेत्तुं
वक्तुं च वाक्यानि युधिष्ठिरस्य ।
प्रियं च मे स्याद्यदि तत्र कश्चि-
द्व्रजेच्छमार्थं कुरुपाण्डवानाम् ॥ ४

स भीष्ममामन्त्र्य कुरुप्रवीरं
वैचित्रवीर्यं च महानुभावम् ।
द्रोणं सपुत्रं विदुरं कृपं च
गान्धारराजं च ससूतपुत्रम् ॥ ५

सर्वे च येऽन्ये धृतराष्ट्रपुत्रा
बलप्रधाना निगमप्रधानाः ।
स्थिताश्च धर्मेषु यथा स्वकेषु
लोकप्रवीराः श्रुतशीलवृद्धाः ॥ ६

एतेषु सर्वेषु समागतेषु
पौरेषु वृद्धेषु च संगतेषु ।
ब्रवीतु वाक्यं प्रणिपातयुक्तं
कुन्तीसुतस्यार्थकरं यथा स्यात् ॥ ७

सर्वास्ववस्थासु च ते न कोप्या
ग्रस्तो हि सोऽर्थो बलमाश्रितैस्तैः ।
प्रियाभ्युपेतस्य युधिष्ठिरस्य
द्यूते प्रसक्तस्य हृतं च राज्यम् ॥ ८

निवार्यमाणश्च कुरुप्रवीरः
सर्वैः सुहृद्भिर्ह्ययमप्यतज्ज्ञः ।
स दीव्यमानः प्रतिदीव्य चैनं
गान्धारराजस्य सुतं मताक्षम् ॥ ९

हित्वा हि कर्णं च सुयोधनं च
समाह्वयद्देवितुमाजमीढः ।
दुरोदरास्तत्र सहस्रशोऽन्य
युधिष्ठिरो यान्विषहेत जेतुम् ॥ १०

उत्सृज्य तान्सौबलमेव चायं
समाह्वयत्तेन जितोऽक्षवत्याम् ।
स दीव्यमानः प्रतिदेवनेन
अक्षेषु नित्यं स्वपराङ्मुखेषु ॥ ११

संरम्भमाणो विजितः प्रसह्य
तत्रापराधः शकुनेर्न कश्चित् ।
तस्मात्प्रणम्यैव वचो ब्रवीतु
वैचित्रवीर्यं बहुसामयुक्तम् ॥ १२

तथा हि शक्यो धृतराष्ट्रपुत्रः
स्वार्थे नियोक्तुं पुरुषेण तेन ।
अयुद्धमाकाङ्क्षत कौरवाणां
साम्नैव दुर्योधनमाह्वयध्वम् ॥ १३

साम्ना जितोऽर्थोऽर्थकरो भवेत
युद्धेऽनयो भविता नेह सोऽर्थः ॥ १४

वैशंपायन उवाच ।

---

राज्यं राज्यार्धम् ॥ ३ ॥ बलं चतुरङ्गम् । निगमो नीतिशास्त्रं ते उभे प्रधानं येषाम् ॥ ६ ॥ दुरोदराः द्यूतकाराः ॥ १० ॥

संरम्भमाणः हठं कुर्वाणः ॥ १२ ॥ द्वितीयोऽध्यायः ॥ २ ॥

एवं ब्रुवत्येव मधुप्रवीरे
शिनिप्रवीरः सहसोत्पपात
तच्चापि वाक्यं परिनिन्द्य तस्य
समाददे वाक्यमिदं समन्युः ॥ १५

॥ इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

सात्यकिना बलरामवचनप्रतिक्षेपपूर्वकं दुर्योधननिग्रहनिर्धारणम् ॥ १ ॥

सात्यकिरुवाच ।
यादृशः पुरुषस्यात्मा तादृशं संप्रभाषते ।
यथारूपोऽन्तरात्मा ते तथारूपं प्रभाषसे ॥ १
सन्ति वै पुरुषाः शूराः सन्ति कापुरुषास्तथा ।
उभावेतौ दृढौ पक्षौ दृश्येते पुरुषान्प्रति ॥ २
एकस्मिन्नेव जायेते कुले क्लीबमहाबलौ ।
फलाफलवती शाखे यथैकस्मिन्वनस्पतौ ॥ ३
नाभ्यसूयामि ते वाक्यं ब्रुवतो लाङ्गलध्वज ।
ये तु शृण्वन्ति ते वाक्यं तानसूयामि माधव ॥४
कथं हि धर्मराजस्य दोषमल्पमपि ब्रुवन् ।
लभते परिषन्मध्ये व्याहर्तुमकुतोभयः ॥ ५
समाहूय महात्मानं जितवन्तोऽक्षकोविदाः ।
अनक्षज्ञं यथाऽश्रद्धं तेषु धर्मजयः कुतः । ६
यदि कुन्तीसुतं गेहे क्रीडन्तं भ्रातृभिः सह ।
अभिगम्य जयेयुस्ते तत्तेषां धर्मतो भवेत् ॥ ७
समाहूय तु राजानं क्षत्रधर्मरतं सदा ।
निकृत्या जितवन्तस्ते किं नु तेषां परं शुभम् ॥८
कथं प्रणिपतेच्चायमिह कृत्वा पणं परम् ।
वनवासाद्विमुक्तस्तु प्राप्तः पैतामहं पदम् ॥ ९
यद्ययं परवित्तानि कामयेत युधिष्ठिरः ।
एवमप्ययमत्यन्तं परान्नार्हति याचितुम् ॥ १०
कथं च धर्मयुक्तास्ते न च राज्यं जिहीर्षवः ।
निवृत्तवनवासांस्तान्य आहुर्विदिता इति ॥ ११
अनुनीता हि भीष्मेण द्रोणेन विदुरेण च ।
न व्यवस्यन्ति पाण्डूनां प्रदातुं पैतृकं वसु ॥१२
अहं तु ताञ्छितैर्बाणैरनुनीय रणे बलात् ।
पादयोः पातयिष्यामि कौन्तेयस्य महात्मनः १३
अथ ते न व्यवस्यन्ति प्रणिपाताय धीमतः ।
गमिष्यन्ति सहामात्या यमस्य सदनं प्रति ॥१४
न हि ते युयुधानस्य संरब्धस्य युयुत्सतः ।
वेगं समर्थाः संसोढुं वज्रस्येव महीधराः ॥ १५
को हि गाण्डीवधन्वानं कश्च चक्रायुधं युधि ।
मां चापि विषहेत्क्रुद्धं कश्च भीमं दुरासदम् ॥१६
यमौ च दृढधन्वानौ यमकल्पौ महाद्युती ।
विराटद्रुपदौ वीरौ यमकालोपमद्युती ॥ १७
को जिजीविषुरासादेद्धृष्टद्युम्नं च पार्षतम् ।
पञ्चैतान्पाण्डवेयांस्तु द्रौपद्याः कीर्तिवर्धनान् १८
समप्रमाणान्पाण्डूनां समवीर्यान्मदोत्कटान् ।
सौभद्रं च महेष्वासममरैरपि दुःसहम् ॥ १९
गदप्रद्युम्नसाम्बांश्च कालसूर्यानलोपमान् ।
ते वयं धृतराष्ट्रस्य पुत्रं शकुनिना सह ॥ २०
कर्णं चैव निहत्याजावभिषेक्ष्याम पाण्डवम् ।
नाधर्मो विद्यते कश्चिच्छत्रून्हत्वाऽऽततायिनः॥ २१
अधर्म्यमयशस्यं च शात्रवाणां प्रयाचनम् ।
हृद्गतस्तस्य यः कामस्तं कुरुध्वमतन्द्रिताः ॥ २२
धार्तराष्ट्रो ह्ययुद्धेन न राज्यं दातुमिच्छति ।
अद्य पाण्डुसुतो राज्यं लभतां वा युधिष्ठिरः ।
निहता वा रणे सर्वे स्वप्स्यन्ति वसुधातले ॥ २३

॥ इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

फलाफलावती । सुपो लुक् आर्षः पूर्वसवर्णो वा ॥ ३ ॥ | तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

द्रुपदेन सात्यकिमतानुमोदनेन राज्ञामाह्वानाय दूतप्रस्थानकथनपूर्वकं स्वपुरोहितस्य धृतराष्ट्रंप्रति प्रेषणकथनम् ॥ १ ॥

द्रुपद उवाच ।
एवमेतन्महाबाहो भविष्यति न संशयः ।
न हि दुर्योधनो राज्यं मधुरेण प्रदास्यति ॥ १
अनुवर्त्स्यति तं चापि धृतराष्ट्रः सुतप्रियः ।
भीष्मद्रोणौ च कार्पण्यान्मौर्ख्याद्राधेयसौबलौ॥२
बलदेवस्य वाक्यं तु मम ज्ञाने न युज्यते ।
एतद्धि पुरुषेणाग्रे कार्यं सुनयमिच्छता ॥ ३
न तु वाच्यो मृदुवचो धार्तराष्ट्रः कथंचन ।
न हि मार्दवसाध्योऽसौ पापबुद्धिर्मतो मम ॥४
गर्दभे मार्दवं कुर्याद्गोषु तीक्ष्णं समाचरेत् ।
मृदु दुर्योधने वाक्यं यो ब्रूयात्पापचेतसि ॥ ५
मृदुं वै मन्यते पापो भाषमाणमशक्तिकम् ।
हितमर्थं न जानीयादबुद्धिर्मार्दवे सति ॥ ६
एतच्चैव करिष्यामो यत्नश्च क्रियतामिह ।
प्रस्थापयाम मित्रेभ्यो बलान्युद्योजयन्तु नः ॥७
शल्यस्य धृष्टकेतोश्च जयत्सेनस्य वा विभो ।
केकयानां च सर्वेषां दूता गच्छन्तु शीघ्रगाः ॥८
स च दुर्योधनो नूनं प्रेषयिष्यति सर्वशः ।
पूर्वाभिपन्नाः सन्तश्च भजन्ते पूर्वचोदनम् ॥ ९
तत्त्वरध्वं नरेन्द्राणां पूर्वमेव प्रचोदने
महद्धि कार्यं वोढव्यमिति मे वर्तते मतिः॥ १०
शल्यस्य प्रेष्यतां शीघ्रं ये च तस्यानुगा नृपाः ।
भगदत्ताय राज्ञे च पूर्वसागरवासिने ॥ ११
अमितौजसे तथोग्राय हार्दिक्यायान्धकाय च।
दीर्घप्रज्ञाय शूराय रोचमानाय वा विभो ॥ १२
आनीयतां बृहन्तश्च सेनाबिन्दुश्च पार्थिवः ।
सेनजित्प्रतिविन्ध्यश्च चित्रवर्मा सुवास्तुकः ॥१३
बाह्लीको मुञ्जकेशश्च चैद्याधिपतिरेव च ।
सुपार्श्वश्च सुबाहुश्च पौरवश्च महारथः ॥ १४
शकानां पह्लवानां च दरदानां च ये नृपाः ।
सुरारिश्च नदीजश्च कर्णवेष्टश्च पार्थिवः ॥ १५
नीलश्च वीरधर्मा च भूमिपालश्च वीर्यवान् ।
दुर्जयो दन्तवक्त्रश्च रुक्मी च जनमेजयः ॥ १६
आषाढो वायुवेगश्च पूर्वपाली च पार्थिवः ।
भूरितेजा देवकश्च एकलव्यः सहात्मजैः ॥ १७
कारूषकाश्च राजानः क्षेमधूर्तिश्च वीर्यवान् ।
काम्भोजा ऋषिका ये च पश्चिमानूपकाश्च ये १८
जयत्सेनश्च काश्यश्च तथा पञ्चनदा नृपाः ।
क्राथपुत्रश्च दुर्धर्षः पार्वतीयाश्च ये नृपाः ॥ १९
जानकिश्च सुशर्मा च मणिमान्योतिमत्सकः ।
पांशुराष्ट्राधिपश्चैव धृष्टकेतुश्च वीर्यवान् ॥ २०
तुण्डश्च दण्डधारश्च बृहत्सेनश्च वीर्यवान् ।
अपराजितो निषादश्च श्रेणिमान्वसुमानपि ॥२१
बृहद्बलो महौजाश्च बाहुः परपुरंजयः ।
समुद्रसेनो राजा च सह पुत्रेण वीर्यवान् ॥ २२
उद्भवः क्षेमकश्चैव वाटधानश्च पार्थिवः ।
श्रुतायुश्च दृढायुश्च साल्वपुत्रश्च वीर्यवान् ॥ २३
कुमारश्च कलिङ्गानामीश्वरो युद्धदुर्मदः ।
एतेषां प्रेष्यतां शीघ्रमेतद्धि मम रोचते ॥ २४
अयं च ब्राह्मणो विद्वान्मम राजन्पुरोहितः ।
प्रेष्यतां धृतराष्ट्राय वाक्यमस्मै प्रदीयताम् ॥२५
यथा दुर्योधनो वाच्यो यथा शान्तनवो नृपः ।
धृतराष्ट्रो यथा वाच्यो द्रोणश्च रथिनां वरः॥२६

॥ इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

कार्पण्यात् तदन्नभक्षणेन दैन्यात् ॥ २

## पञ्चमोऽध्यायः ॥ ५ ॥

श्रीकृष्णेन द्रुपदवाक्यप्रशंसनपूर्वकं राज्ञां धृतराष्ट्रस्य च दूतपुरोहितप्रेषणं संदिश्य द्वारकांप्रति गमनम् ॥ १ ॥ विराटद्रुपददूताहूतानां राज्ञामागमनम् ॥ २ ॥ दुर्योधनदूताहूतानां च राज्ञामागमनम् ॥ ३ ॥

वैशंपायन उवाच ।
द्रुपदेनैवमुक्ते तु वाक्ये वाक्यविदां वरः ।
वसुदेवसुतस्तत्र वृष्णिसिंहोऽब्रवीदिदम् ॥ १
उपपन्नमिदं वाक्यं सोमकानां धुरंधरे ।
अर्थसिद्धिकरं राज्ञः पाण्डवस्यामितौजसः ॥ २
एतच्च पूर्वं कार्यं नः सुनीतिमभिकाङ्क्षताम् ।
अन्यथा ह्याचरन्कर्म पुरुषः स्यात्सुबालिशः ॥ ३
किं तु संबन्धकं तुल्यमस्माकं कुरुपाण्डुषु ।
यथेष्टं वर्तमानेषु पाण्डवेषु च तेषु च ॥ ४
ते विवाहार्थमानीता वयं सर्वे तथा भवान् ।
कृते विवाहे मुदिता गमिष्यामो गृहान्प्रति ॥ ५
भवान्वृद्धतमो राज्ञां वयसा च श्रुतेन च ।
शिष्यवत्ते वयं सर्वे भवामेह न संशयः ॥ ६
भवन्तं धृतराष्ट्रश्च सततं बहु मन्यते ।
आचार्ययोः सखा चासि द्रोणस्य च कृपस्य च ॥ ७
स भवान्प्रेषयत्वद्य पाण्डवार्थकरं वचः ।
सर्वेषां निश्चितं तन्नः प्रेषयिष्यति यद्भवान् ॥ ८
यदि तावच्छमं कुर्यान्न्यायेन कुरुपुङ्गवः ।
न भवेत्कुरुपाण्डूनां सौभ्रात्रेण महान्क्षयः ॥ ९
अथ दर्पान्वितो मोहान्न कुर्याद्धृतराष्ट्रजः ।
अन्येषां प्रेषयित्वा च पश्चादस्मान्समाह्वयेः ॥ १०
ततो दुर्योधनो मन्दः सहामात्यः सबान्धवः ।
निष्ठामापत्स्यते मूढः क्रुद्धे गाण्डीवधन्वनि ॥ ११
वैशंपायन उवाच ।
ततः सत्कृत्य वार्ष्णेयं विराटः पृथिवीपतिः ।
गृहान्प्रस्थापयामास सगणं सहबान्धवम् ॥ १२
द्वारकां तु गते कृष्णे युधिष्ठिरपुरोगमाः ।
चक्रुः साङ्ग्रामिकं सर्वं विराटश्च महीपतिः ॥ १३
ततः संप्रेषयामास विराटः सह बान्धवैः ।
सर्वेषां भूमिपालानां द्रुपदश्च महीपतिः ॥ १४
वचनात्कुरुसिंहानां मत्स्यपाञ्चालयोश्च ते ।
समाजग्मुर्महीपालाः संप्रहृष्टा महाबलाः ॥ १५
तच्छ्रुत्वा पाण्डुपुत्राणां समागच्छन्महद्बलम् ।
धृतराष्ट्रसुताश्चापि समानिन्युर्महीपतीन् ॥ १६
समाकुला मही राजन्कुरुपाण्डवकारणात् ।
तदा समभवत्कृत्स्ना संप्रयाणे महीक्षिताम् ॥ १७
संकुला च तदा भूमिश्चतुरङ्गबलान्विता ।
बलानि तेषां वीराणामागच्छन्ति ततस्ततः ॥ १८
चालयन्तीव गां देवीं सपर्वतवनामिमाम् ।
ततः प्रज्ञावयोवृद्धं पाञ्चाल्यः स्वपुरोहितम् ।
कुरुभ्यः प्रेषयामास युधिष्ठिरमते स्थितः ॥ १९

॥ इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

द्रुपदेन धृतराष्ट्रंप्रति स्वपुरोहितप्रेषणम् ॥ १ ॥ पुरोहितस्य हास्तिनपुरगमनम् ॥ २ ॥

द्रुपद उवाच ।
भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेष्वपि द्विजातयः ॥ १
द्विजेषु वैद्याः श्रेयांसो वैद्येषु कृतबुद्धयः ।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवादिनः ॥
स भवान्कृतबुद्धीनां प्रधान इति मे मतिः ।

संबन्धकं तुल्यमिति । पाण्डवेषु कुन्तीद्वारा । कुरुषु दुर्योधनकन्यायाः साम्बेनाहरणात् ॥ ४ ॥ निष्ठां नाशम् ॥ ११ ॥ पञ्चमोऽध्यायः ॥ ५ ॥

वैद्याः विद्यावन्तः सिद्धान्तज्ञाः ॥ २ ॥ षष्ठोऽध्यायः ॥ ६ ॥

:लेन च विशिष्टोऽसि वयसा च श्रुतेन च ।
:ज्ञया सदृशश्चासि शुक्रेणाङ्गिरसेन च ॥ ३
वेदितं चापि ते सर्वं यथावृत्तः स कौरवः ।
ाण्डवश्च यथावृत्तः कुन्तीपुत्रो युधिष्ठिरः ॥ ४
ृतराष्ट्रस्य विदिते वञ्चिताः पाण्डवाः परैः ।
वेदुरेणानुनीतोऽपि पुत्रमेवानुवर्तते ॥ ५
ाकुनिर्बुद्धिपूर्वं हि कुन्तीपुत्रं समाह्वयत् ।
मनक्षज्ञं मताक्षः सन्क्षत्रवृत्ते स्थितं शुचिम् ॥ ६
ो तथा वञ्चयित्वा तु धर्मराजं युधिष्ठिरम् ।
ा कस्यांचिदवस्थायां राज्यं दास्यन्ति वै स्वयम् ७
मवांस्तु धर्मसंयुक्तं धृतराष्ट्रं ब्रुवन्वचः ।
मनांसि तस्य योधानां ध्रुवमावर्तयिष्यति ॥ ८
वेदुरश्चापि तद्वाक्यं साधयिष्यति तावकम् ।
भीष्मद्रोणकृपादीनां भेदं संजनयिष्यति ॥ ९
अमात्येषु च भिन्नेषु योधेषु विमुखेषु च ।
पुनरेकत्र करणं तेषां कर्म भविष्यति ॥ १०
एतस्मिन्नन्तरे पार्थाः सुखमेकाग्रबुद्धयः ।
सेनाकर्म करिष्यन्ति द्रव्याणां चैव सञ्चयम् ११

भिद्यमानेषु च स्वेषु लम्बमाने तथा त्वयि ।
न तथा ते करिष्यन्ति सेनाकर्म न संशयः॥१२
एतत्प्रयोजनं चात्र प्राधान्येनोपलभ्यते ।
संगत्या धृतराष्ट्रश्च कुर्याद्धर्म्यं वचस्तव ॥ १३
स भवान्धर्मयुक्तश्च धर्म्यं तेषु समाचरन् ।
कृपालुषु परिक्लेशान्पाण्डवीयान्प्रकीर्तयन् ॥ १४
वृद्धेषु कुलधर्मं च ब्रुवन्पूर्वैरनुष्ठितम् ।
विभेत्स्यति मनांसेषामिति मे नात्र संशयः॥१५
न च तेभ्यो भयं तेऽस्ति ब्राह्मणो ह्यसि वेदवित् ।
दूतकर्मणि युक्तश्च स्थविरश्च विशेषतः ॥ १६
स भवान्पुष्ययोगेन मुहूर्तेन जयेन च ।
कौरवेयान्प्रयात्वाशु कौन्तेयस्यार्थसिद्धये ॥ १७
वैशंपायन उवाच ।
तथाऽनुशिष्टः प्रययौ द्रुपदेन महात्मना ।
पुरोधा वृत्तसंपन्नो नगरं नागसाह्वयम् ॥ १८
शिष्यैः परिवृतो विद्वान्नीतिशास्त्रार्थकोविदः ।
पाण्डवानां हितार्थाय कौरवान्प्रतिजग्मिवान् १९

॥ इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

दुर्योधनार्जुनयोः कृष्णदर्शनाय यदृच्छया युगपत् द्वारकागमनम् ॥ १ ॥ अर्जुनेन सारथ्येन वरयित्वा तेन सह युधिष्ठिरसमीपगमनम् ॥ २ ॥ दुर्योधनेन नारायणाह्वयकृष्णकुमारानादाय कृतवर्मणासह स्वपुरगमनम् ॥ ३ ॥

वैशंपायन उवाच ।
पुरोहितं ते प्रस्थाप्य नगरं नागसाह्वयम् ।
दूतान्प्रस्थापयामासुः पार्थिवेभ्यस्ततस्ततः ॥ १
प्रस्थाप्य दूतानन्यत्र द्वारकां पुरुषर्षभः ।
स्वयं जगाम कौरव्यः कुन्तीपुत्रो धनञ्जयः ॥ २
गते द्वारवतीं कृष्णे बलदेवे च माधवे ।
सह वृष्ण्यन्धकैः सर्वैर्भोजैश्च शतशस्तदा ॥ ३
सर्वमागमयामास पाण्डवानां विचेष्टितम् ।
धृतराष्ट्रात्मजो राजा गूढैः प्रणिहितैश्चरैः ॥ ४

स श्रुत्वा माधवं यान्तं सदश्वैरनिलोपमैः ।
बलेन नातिमहता द्वारकामभ्ययात्पुरीम् ॥ ५
तमेव दिवसं चापि कौन्तेयः पाण्डुनन्दनः ।
आनर्तनगरीं रम्यां जगामाशु धनञ्जयः ॥ ६
तौ यात्वा पुरुषव्याघ्रौ द्वारकां कुरुनन्दनौ ।
सुप्तं ददृशतुः कृष्णं शयानं चाभिजग्मतुः ॥ ७
दुर्योधनस्तु प्रथमं वासुदेवमुपाश्रयत् ।
उच्छीर्षतश्च कृष्णस्य निषसाद वरासने ॥ ८
ततः किरीटी तस्यानु प्रविवेश महामनाः ।
पश्चार्धे तु स कृष्णस्य प्रह्वोऽतिष्ठत्कृताञ्जलिः॥९

आगमयामास ज्ञातवान् ॥ ४ ॥

प्रतिबुद्धः स वार्ष्णेयो ददर्शाग्रे किरीटिनम् ।
सिंहासनगतं पश्चात्परिवृत्य च दृष्टवान् ॥ १०
स तयोः स्वागतं कृत्वा यथावत्प्रतिपूज्य तौ ।
तदागमनजं हेतुं पप्रच्छ मधुसूदनः ॥ ११
ततो दुर्योधनः कृष्णमुवाच प्रहसन्निव
विग्रहेऽस्मिन्भवान्साह्यं मम दातुमिहार्हति ॥ १२
समं हि भवतः सख्यं मम चैवार्जुनेऽपि च ।
तथा संबन्धकं तुल्यमस्माकं त्वयि माधव ॥ १३
अहं चाभिगतः पूर्वं त्वामद्य मधुसूदन ।
पूर्वं चाभिगतं सन्तो भजन्ते पूर्वसारिणः ॥ १४
त्वं च श्रेष्ठतमो लोके सतामद्य जनार्दन ।
सततं संमतश्चैव सद्वृत्तमनुपालय ॥ १५

कृष्ण उवाच ।

भवानभिगतः पूर्वमत्र मे नास्ति संशयः ।
दृष्टस्तु प्रथमं राजन्मया पार्थो धनञ्जयः ॥ १६
तव पूर्वाभिगमनात्पूर्वं चाप्यस्य दर्शनात् ।
साहाय्यमुभयोरेव करिष्यामि सुयोधन ॥ १७
प्रवारणं तु बालानां पूर्वं कार्यमिति श्रुतिः ।
तस्मात्प्रवारणं पूर्वमर्हः पार्थो धनञ्जयः ॥ १८
मत्संहननतुल्यानां गोपानामर्बुदं महत् ।
नारायणा इति ख्याताः सर्वे संग्रामयोधिनः ॥ १९
ते वा युधि दुराधर्षा भवन्त्वेकस्य सैनिकाः ।
अयुध्यमानः संग्रामे न्यस्तशस्त्रोऽहमेकतः ॥ २०
आभ्यामन्यतरं पार्थ यत्ते हृद्यतरं मतम्
तद्वृणीतां भवानग्रे प्रवार्यस्त्वं हि धर्मतः ॥ २१
'एतद्विदित्वा कौन्तेय विचार्य च पुनः पुनः ।
तान्वा वरय साहाय्ये मां साचिव्येऽथवा पुनः'

वैशंपायन उवाच ।

एवमुक्तस्तु कृष्णेन कुन्तीपुत्रो धनञ्जयः ।
अयुध्यमानं संग्रामे वरयामास केशवम् ॥ २३
नारायणममित्रघ्नं कामाज्जातमजं नृषु ।
सर्वक्षत्रस्य पुरतो देवदानवयोरपि ॥ २४
दुर्योधनस्तु तत्सैन्यं सर्वमावरयत्तदा ।
सहस्राणां सहस्रं तु योधानां प्राप्य भारत ॥ २५
कृष्णं चापहृतं ज्ञात्वा संप्राप परमां मुदम् ।
दुर्योधनस्तु तत्सैन्यं सर्वमादाय पार्थिवः ॥ २६
ततोऽभ्ययाद्भीमबलो रौहिणेयं महाबलम् ।
सर्वं चागमने हेतुं स तस्मै संन्यवेदयत्
प्रत्युवाच ततः शौरिर्धार्तराष्ट्रमिदं वचः ॥ २७

बलदेव उवाच ।

विदितं ते नरव्याघ्र सर्वं भवितुमर्हति ।
यन्मयोक्तं विराटस्य पुरा वैवाहिके तदा ॥ २८
निगृह्योक्तो हृषीकेशस्त्वदर्थं कुरुनन्दन ।
मया संबन्धकं तुल्यमिति राजन्पुनःपुनः ॥ २९
न च तद्वाक्यमुक्तं वै केशवं प्रत्यपद्यत ।
न चाहमुत्सहे कृष्णं विना स्थातुमपि क्षणम् ॥ ३०
नाहं सहायः पार्थस्य नापि दुर्योधनस्य वै
इति मे निश्चिता बुद्धिर्वासुदेवमवेक्ष्य ह ॥ ३१
जातोऽसि भारते वंशे सर्वपार्थिवपूजिते ।
गच्छ युध्यस्व धर्मेण क्षात्रेण पुरुषर्षभ ॥ ३२

वैशंपायन उवाच ।

इत्येवमुक्तस्तु तदा परिष्वज्य हलायुधम् ।
कृष्णं चापि महाबाहुमामन्त्र्य भरतर्षभ ॥ ३३
सोऽभ्ययात्कृतवर्माणं धृतराष्ट्रसुतो नृपः ।
कृतवर्मा ददौ तस्य सेनामक्षौहिणीं तदा ॥ ३४
स तेन सर्वसैन्येन भीमेन कुरुनन्दनः ।
वृतः परिययौ हृष्टः सुहृदः संप्रहर्षयन् ॥ ३५
ततः पीताम्बरधरो जगत्स्रष्टा जनार्दनः ।
गते दुर्योधने कृष्णः किरीटिनमथाब्रवीत् ॥ ३६
अयुध्यमानः कां बुद्धिमास्थायाहं वृतस्त्वया ।

अर्जुन उवाच ।

भवान्समर्थस्तान्सर्वान्निहन्तुं नात्र संशयः ।
निहन्तुमहमप्येकः समर्थः पुरुषर्षभ ॥ ३७
भवांस्तु कीर्तिमाँल्लोके तद्यशस्त्वां गमिष्यति ।
यशसां चाहमप्यर्थी तस्मादसि मया वृतः ॥ ३८

प्रवारणं ईप्सितप्रदानम् । पूर्वमर्हः त्वत्तः कनिष्ठत्वादित्यर्थः ॥ १८ ॥ सप्तमोऽध्यायः ॥ ७ ॥

सारथ्यं तु त्वया कार्यमिति मे मानसं सदा ।
चिररात्रेप्सितं कामं तद्भवान्कर्तुमर्हति ॥ ३९
वासुदेव उवाच ।
उपपन्नामिदं पार्थ यत्स्पर्धसि मया सह
सारथ्यं ते करिष्यामि कामः संपद्यतां तव ॥४०
वैशंपायन उवाच ।
एवं प्रमुदितः पार्थः कृष्णेन सहितस्तदा ।
वृतो दाशार्हप्रवरैः पुनरायाद्युधिष्ठिरम् ॥ ४१

॥ इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

पाण्डवान्प्रत्यागच्छतः शल्यस्य मार्गे भ्रमाद्दुर्योधनसभाप्रवेशः ॥ १ ॥ तद्भृत्यकृतोपचारतुष्टेन तेन पारितोषिकदाने प्रतिश्रुते गूढेनसता दुर्योधनेन प्रकटीभूय साहाय्यवरणम् ॥ २ ॥ पाण्डवानुपगम्य दुर्योधनवञ्चनां कथितवता शल्येन युधिष्ठिराभ्यर्थनया कर्णस्य सारथ्यकरणेन तेजोवधकरणप्रतिज्ञानम् ॥ ३ ॥

वैशंपायन उवाच ।
शल्यः श्रुत्वा तु दूतानां सैन्येन महता वृतः ।
अभ्ययात्पाण्डवान्राजन्सह पुत्रैर्महारथैः ॥ १
तस्य सेनानिवेशोऽभूदध्यर्धमिव योजनम् ।
तथा हि विपुलां सेनां बिभर्ति स नरर्षभः ॥ २
अक्षौहिणीपती राजन्महावीर्यपराक्रमः ।
विचित्रकवचाः शूरा विचित्रध्वजकार्मुकाः ॥ ३
विचित्राभरणाः सर्वे विचित्ररथवाहनाः ।
विचित्रस्रग्धराः सर्वे विचित्राम्बरभूषणाः ॥ ४
स्वदेशवेषाभरणा वीराः शतसहस्रशः ।
तस्य सेनाप्रणेतारो बभूवुः क्षत्रियर्षभाः ॥ ५
व्यथयन्निव भूतानि कम्पयन्निव मेदिनीम् ।
शनैर्विश्रामयन्सेनां स ययौ यत्र पाण्डवः ॥ ६
ततो दुर्योधनः श्रुत्वा महात्मानं महारथम् ।
उपायान्तमभिद्रुत्य स्वयमानर्च भारत ॥ ७
कारयामास पूजार्थं तस्य दुर्योधनः सभाः ।
रमणीयेषु देशेषु रत्नचित्राः स्वलङ्कृताः ॥ ८
शिल्पिभिर्विविधैश्चैव क्रीडास्तत्र प्रयोजिताः ।
तत्र माल्यानि मांसानि भक्ष्यं पेयं च सत्कृतम् ९
कूपाश्च विविधाकारा मनोहर्षविवर्धनाः ।
वाप्यश्च विविधाकारा औदकानि गृहाणि च १०
स ताः सभाः समासाद्य पूज्यमानो यथाऽमरः ।
दुर्योधनस्य सचिवैर्देशे देशे समन्ततः ॥ ११
आजगाम सभामन्यां देवावसथवर्चसम् ।
स तत्र विषयैर्युक्तैः कल्याणैरतिमानुषैः ॥ १२
मेनेऽभ्यधिकमात्मानमवमेने पुरन्दरम् ।
पप्रच्छ स ततः प्रेष्यान्प्रहृष्टः क्षत्रियर्षभः ॥ १३
युधिष्ठिरस्य पुरुषाः केऽत्र चक्रुः सभा इमाः ।
आनीयन्तां सभाकाराः प्रदेयार्हा हि मे मताः ॥
प्रदेयमेषां दास्यामि कुन्तीपुत्रोऽनुमन्यताम् ।
'ततः प्रहृष्टं राजानं ज्ञात्वा ते सचिवास्तदा ।'
दुर्योधनाय तत्सर्वं कथयन्ति स्म विस्मिताः ॥१५
संप्रहृष्टो यदा शल्यो दिदित्सुरपि जीवितम् ।
गूढो दुर्योधनस्तत्र दर्शयामास मातुलम् ॥ १६
तं दृष्ट्वा मद्रराजश्च ज्ञात्वा यत्नं च तस्य तम् ।
परिष्वज्याब्रवीत्प्रीत इष्टोऽर्थो ध्रियतामिति ॥१७
दुर्योधन उवाच ।
सत्यवाग्भव कल्याण वरो वै मम दीयताम् ।
सर्वसेनाप्रणेता वै भवान्भवितुमर्हति ॥ १८
यथैव पाण्डवास्तुभ्यं तथैव भवतो ह्यहम् ।
अनुमान्यं च पाल्यं च भक्तं च भज मां विभो १९
वैशंपायन उवाच ।
कृतमित्यब्रवीच्छल्यः किमन्यत्क्रियतामिति ।
कृतमित्येव गान्धारिः प्रत्युवाच पुनःपुनः ॥२०
शल्य उवाच ।
गच्छ दुर्योधन पुरं स्वकमेव नरर्षभ ।
अहं गमिष्ये द्रष्टुं वै युधिष्ठिरमरिंदमम् ॥ २१
दृष्ट्वा युधिष्ठिरं राजन्क्षिप्रमेष्ये नराधिप ।

अवश्यं चापि द्रष्टव्यः पाण्डवः पुरुषर्षभः॥ २२
दुर्योधन उवाच ।
क्षिप्रमागम्यतां राजन्पाण्डवं वीक्ष्य पार्थिव ।
त्वय्यधीनाः स्म राजेन्द्र वरदानं स्मरस्व नः॥'२३
शल्य उवाच ।
क्षिप्रमेष्यामि भद्रं ते गच्छस्व स्वपुरं नृप ।
'दृष्ट्वा तु पाण्डवान्राजन्न मिथ्या कर्तुमुत्सहे॥२४
वैशंपायन उवाच ।
पर्यष्वजेतामन्योन्यं शल्यदुर्योधनावुभौ ॥ २५
स तथा शल्यमामन्त्र्य पुनरायात्स्वकं पुरम् ।
शल्यो जगाम कौन्तेयानाख्यातुं कर्म तस्य तत्२६
उपप्लाव्यं स गत्वा तु स्कन्धावारं प्रविश्य च ।
पाण्डवानथ तान्सर्वाञ्शल्यस्तत्र ददर्श ह॥ २७
चिरात्तु दृष्ट्वा राजानं मातुलं समितिञ्जयम् ।
आसनेभ्यः समुत्पेतुः सर्वे सहयुधिष्ठिराः ॥ २८
तथा भीमार्जुनौ हृष्टौ स्वस्रीयौ च यमावुभौ ।
द्रौपदी च सुभद्रा च अभिमन्युश्च भारत ॥ २९
समेत्य च महाबाहुं शल्यं पाण्डुसुतस्तदा ।
पाद्यमर्घ्यं च गां चैव प्रतिग्राह्य पुरोधसा ॥ ३०
कृताञ्जलिरदीनात्मा धर्मात्मा शल्यमब्रवीत् ।
स्वागतं तेऽस्तु वै राजन्नेतदासनमास्यताम्॥३१
ततो न्यषीदच्छल्यश्च काञ्चने परमासने ।
तत्र पाद्यमथार्घ्यं च न्यवेदयत पाण्डवः ॥ ३२
शल्य उवाच ।
दुःखस्यैतस्य महतो धार्तराष्ट्रकृतस्य वै ।
अवाप्स्यसि फलं राजन्हत्वा शत्रून्परन्तप ॥ ३३
विदितं ते महाराज लोकतन्त्रं नराधिप ।
तस्माल्लोककृतं किञ्चित्तव तात न विद्यते ॥ ३४
वैशंपायन उवाच ।
निवेद्य चार्घ्यं विधिवन्मद्रराजाय भारत ।
कुशलं पाण्डवोऽपृच्छच्छल्यं सर्वसुखावहम् ॥३५
स तैः परिवृतः सर्वैः पाण्डवैर्धर्मचारिभिः ।
आसने चोपविष्टः स शल्यः पार्थमथाब्रवीत्॥३६
शल्य उवाच ।
कुशलं राजशार्दूल सर्वत्र कुरुनन्दन ।
अरण्यवासाद्दिष्ट्याऽसि विमुक्तो जयतां वर ॥३७
दुष्करं ते कृतं राजन्निर्जने गहने वने ।
भ्रातृभिः सह कौन्तेय कृष्णया चानयाऽनघ॥३८
अज्ञातवासं घोरं च वसता दुष्करं कृतम् ।
दुःखमेव कुतः सौख्यं राज्यभ्रष्टस्य भारत ॥३९
सत्ये तपसि दाने च तव बुद्धिर्युधिष्ठिर ।
क्षमा दमश्चाहिंसा च सत्यं चैव युधिष्ठिर ॥ ४०
अद्भुतश्च पुनर्लोकस्त्वयि राजन्प्रतिष्ठितः ।
मृदुर्वदान्यो ब्रह्मण्यो दान्तो धर्मपरायणः ॥ ४१
धर्मास्ते विदिता राजन्बहवो लोकसाक्षिकाः ।
सर्वं जगदिदं तात विदितं ते परन्तप ॥ ४२
मुदितश्च पुनर्लोकस्त्वयि राजन्प्रतिष्ठिते ।
दिष्ट्या कृच्छ्रमिदं राजन्पारितं भरतर्षभ ॥ ४३
दिष्ट्या पश्यामि राजेन्द्र धर्मात्मानं सहानुगम् ।
निस्तीर्णदुष्करं राजंस्त्वां धर्मनिचयं प्रभो ॥ ४४
वैशंपायन उवाच ।
ततोऽस्याकथयद्राजा दुर्योधनसमागमम् ।
तच्च शुश्रूषितं सर्वं वरदानं च भारत ॥ ४५
युधिष्ठिर उवाच ।
सुकृतं ते कृतं राजन्प्रहृष्टेनान्तरात्मना ।
दुर्योधनस्य यद्वीर त्वया वाचा प्रतिश्रुतम् ॥४६
एकं त्विच्छामि भद्रं ते क्रियमाणं महीपते ।
राजन्नकर्तव्यमपि कर्तुमर्हसि सत्तम ॥ ४७
मम त्ववेक्षया वीर शृणु विज्ञापयामि ते ।
भवानिह महाराज वासुदेवसमो युधि ॥ ४८
कर्णार्जुनाभ्यां संप्राप्ते द्वैरथे राजसत्तम ।
कर्णस्य भवता कार्यं सारथ्यं नात्र संशयः ॥४९
तत्र पाल्योऽर्जुनो राजन्यदि मत्प्रियमिच्छसि ।
तेजोवधश्च ते कार्यः सौतेरस्मज्जयावहः ।
अकर्तव्यमपि ह्येतत्कर्तुमर्हसि मातुल ॥ ५०
शल्य उवाच ।

उपप्लाव्यं विराटनगरस्य प्रदेशविशेषम् । स्कन्धावारं सेनानिवेशस्थानम् ॥ २७ ॥

शृणु पाण्डव भद्रं ते यद्ब्रवीषि महात्मनः ।
तेजोवधनिमित्तं मां सूतपुत्रस्य सङ्गमे ॥ ५१
अहं तस्य भविष्यामि सङ्ग्रामे सारथिर्ध्रुवम् ।
वासुदेवेन हि समं नित्यं मां सोऽभिमन्यते॥५२
तस्याहं कुरुशार्दूल प्रतीपमहितं वचः ।
ध्रुवं संकथयिष्यामि योद्धुकामस्य संयुगे ॥ ५३
यथा स हृतदर्पश्च हृततेजाश्च पाण्डव ।
भविष्यति सुखं हन्तुं सत्यमेतद्ब्रवीमि ते ॥ ५४
एवमेतत्करिष्यामि यथा तात त्वमात्थ माम् ।
यच्चान्यदपि शक्ष्यामि तत्करिष्यामि ते प्रियम् ५५
यच्च दुःखं त्वया प्राप्तं द्यूते वै कृष्णया सह ।
परुषाणि च वाक्यानि सूतपुत्रकृतानि वै ॥ ५६
जटासुरात्परिक्लेशः कीचकाच्च महाद्युते ।
द्रौपद्याऽधिगतं सर्वं दमयन्त्या यथाऽशुभम् ॥५७
सर्वं दुःखमिदं वीर सुखोदर्कं भविष्यति ।
नात्र मन्युस्त्वया कार्यो विधिर्हि बलवत्तरः॥५८
दुःखानि हि महात्मानः प्राप्नुवन्ति युधिष्ठिर ।
देवैरपि हि दुःखानि प्राप्तानि जगतीपते ॥ ५९
इन्द्रेण श्रूयते राजन्सभार्येण महात्मना ।
अनुभूतं महद्दुःखं देवराजेन भारत ॥ ६०

॥ इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ॥ ९ ॥

शल्येन इन्द्रस्यापि दुःखानुभवे कथिते युधिष्ठिरपृच्छया तेन विस्तरेण तत्कथनोपक्रमः ॥१॥ इन्द्रजिघांसया त्वष्ट्रा सृष्टस्य त्रिशिरसो विश्वरूपस्य तपोभङ्गाय इन्द्रेण अप्सरसां प्रेषणम् ॥२॥ अप्सरोभिस्तस्याधर्षणीयत्वे ज्ञाते इन्द्रेण वज्रपातनात्तस्य हननम् ॥३॥ हतेपि तस्मिन् जीवतीव दृश्यमाने भयादिन्द्रप्रार्थनया यदृच्छया आगतेन तक्ष्णा तच्छिरश्छेदनम् ॥४॥ विश्वरूपहननकुपितेन त्वष्ट्रा पुनरिन्द्रवधाय वृत्रस्योत्पादनम् ॥५॥ वृत्रेणेन्द्रे पराजिते सेन्द्राणां देवानां विष्णुं प्रति गमनम् ॥६॥

युधिष्ठिर उवाच ।
कथमिन्द्रेण राजेन्द्र सभार्येण महात्मना ।
दुःखं प्राप्तं परं घोरमेतदिच्छामि वेदितुम् ॥ १
शल्य उवाच ।
शृणु राजन्पुरावृत्तमितिहासं पुरातनम् ।
सभार्येण यथा प्राप्तं दुःखमिन्द्रेण भारत ॥ २
त्वष्टा प्रजापतिर्ह्यासीद्देवश्रेष्ठो महातपाः ।
स पुत्रं वै त्रिशिरसमिन्द्रद्रोहात्किलासृजत् ॥ ३
ऐन्द्रं स प्रार्थयत्स्थानं विश्वरूपो महाद्युतिः ।
तैस्त्रिभिर्वदनैर्घोरैः सूर्येन्दुज्वलनोपमैः ॥ ४
वेदानेकेन सोऽधीते सुरामेकेन चापिबत् ।
एकेन च दिशः सर्वाः पिबन्निव निरीक्षते ॥ ५
स तपस्वी मृदुर्दान्तो धर्मे तपसि चोद्यतः ।
तपस्तस्य महत्तीव्रं सुदुश्चरमरिन्दम ॥ ६
तस्य दृष्ट्वा तपोवीर्यं सत्यं चामिततेजसः ।
विषादमगमच्छक्र इन्द्रोऽयं मा भवेदिति ॥ ७
कथं सज्जेच्च भोगेषु न च तप्येन्महत्तपः ।
विवर्धमानस्त्रिशिराः सर्वं हि भुवनं ग्रसेत् ॥ ८
इति संचिन्त्य बहुधा बुद्धिमान्भरतर्षभ ।
आज्ञापयत्सोऽप्सरसस्त्वष्टृपुत्रप्रलोभने ॥ ९
यथा स सज्जेत्त्रिशिराः कामभोगेषु वै भृशम् ।
क्षिप्रं कुरुत गच्छध्वं प्रलोभयत माचिरम् ॥ १०
शृङ्गारवेषाः सुश्रोण्यो हारैर्युक्ता मनोहरैः ।
हावभावसमायुक्ताः सर्वाः सौन्दर्यशोभिताः ११
प्रलोभयत भद्रं वः शमयध्वं भयं मम ।
अस्वस्थं ह्यात्मनात्मानं लक्षयामि वराङ्गनाः॥१२
भयं तन्मे महाघोरं क्षिप्रं नाशयताबलाः ।
अप्सरस ऊचुः ।
तथा यत्नं करिष्यामः शक्र तस्य प्रलोभने ।
यथा नावाप्स्यसि भयं तस्माद्बलनिषूदन ॥ १३

प्रतीपं प्रसङ्गप्रतिकूलम् । अहितं परिणामविरुद्धम् ॥ ५३ ॥ यम् ॥ ५८ ॥ अष्टमोऽध्यायः ॥ ८ ॥

हावाः शृङ्गारचेष्टाः । भावाः चित्तविकारा हर्षादयस्तैर्युक्ताः ॥ ११ ॥

निर्दहन्निव चक्षुर्भ्यां योऽसावास्ते तपोनिधिः ।
तं प्रलोभयितुं देव गच्छामः सहिता वयम्॥१४
यतिष्यामो वशे कर्तुं व्यपनेतुं च ते भयम् ।
शल्य उवाच ।
इन्द्रेण तास्त्वनुज्ञाता जग्मुस्त्रिशिरसोऽन्तिकम् ।
तत्र ता विविधैर्भावैर्लोभयन्त्यो वराङ्गनाः ॥१५
नृत्तं संदर्शयामासुस्तथैवाङ्गेषु सौष्ठवम् ।
नाभ्यगच्छत्प्रहर्षं ताः स पश्यन्सुमहातपाः ॥१६
इन्द्रियाणि वशे कृत्वा पूर्णसागरसन्निभः ।
तास्तु यत्नं परं कृत्वा पुनः शक्रमुपस्थिताः॥१७
कृताञ्जलिपुटाः सर्वा देवराजमथाब्रुवन् ।
न स शक्यः सुदुर्धर्षो धैर्याच्चालयितुं प्रभो ॥१८
यत्ते कार्यं महाभाग क्रियतां तदनन्तरम् ।
संपूज्याप्सरसः शक्रो विसृज्य च महामतिः ॥१९
चिन्तयामास तस्यैव वधोपायं युधिष्ठिर ।
स तूष्णीं चिन्तयन्वीरो देवराजः प्रतापवान्२०
विनिश्चितमतिर्धीमान्वधे त्रिशिरसोऽभवत् ।
वज्रमस्य क्षिपाम्यद्य स क्षिप्रं नभविष्यति ॥२१
शत्रुः प्रवृद्धो नोपेक्ष्यो दुर्बलोऽपि बलीयसा ।
शास्त्रबुद्ध्या विनिश्चित्य कृत्वा बुद्धिं वधे दृढाम् २२
अथ वैश्वानरनिभं घोररूपं भयावहम् ।
मुमोच वज्रं संक्रुद्धः शक्रस्त्रिशिरसं प्रति ॥ २३
स पपात हतस्तेन वज्रेण दृढमाहतः ।
पर्वतस्येव शिखरं प्रणुन्नं मेदिनीतले ॥ २४
तं तु वज्रहतं दृष्ट्वा शयानमचलोपमम् ।
न शर्म लेभे देवेन्द्रो दीपितस्तस्य तेजसा ॥ २५
हतोऽपि दीप्ततेजाः स जीवन्निव हि दृश्यते ।
घातितस्य शिरांस्याजौ जीवन्तीवाद्भुतानि वै२६
'शिरांसि तस्याजायन्त त्रीण्येव शकुनास्त्रयः ।
तित्तिरिः कलविङ्कश्च तथैव च कपिञ्जलः ।
विश्वरूपशिरांस्येव जायन्ते तानि भारत ॥' २७
ततोऽतिभीतगात्रस्तु शक्र आस्ते विचारयन् ।
अथाजगाम परशुं स्कन्धेनादाय वर्धकिः॥ २८
तदरण्यं महाराज यत्रास्तेऽसौ निपातितः ।
स भीतस्तत्र तक्षाणं घटमानं शचीपतिः ॥ २९
अपश्यदब्रवीच्चैनं सत्वरं पाकशासनः ।
क्षिप्रं छिन्धि शिरांस्यस्य कुरुष्व वचनं मम ॥ ३०
तक्षोवाच ।
महास्कन्धो भृशं ह्येष परशुर्नभविष्यति ।
कर्तुं चाहं न शक्ष्यामि कर्म सद्भिर्विगर्हितम्३१
इन्द्र उवाच ।
मा भैस्त्वं शीघ्रमेतद्वै कुरुष्व वचनं मम ।
मत्प्रसादाद्धि ते शस्त्रं वज्रकल्पं भविष्यति॥ ३२
तक्षोवाच ।
कं भवन्तमहं विद्यां घोरकर्माणमद्य वै ।
एतदिच्छाम्यहं श्रोतुं तत्त्वेन कथयस्व मे ॥ ३३
इन्द्र उवाच ।
अहमिन्द्रो देवराजस्तक्षन्विदितमस्तु ते ।
कुरुष्वैतद्यथोक्तं मे तक्षन्माऽत्र विचारय ॥ ३४
'मया हि निहतः शेते त्रिशिरास्त्वंच विद्धि वै।
वैशंपायन उवाच ।
स प्रह्वः प्राञ्जलिर्भूत्वा इदं वचनमब्रवीत् ॥' ३५
क्रूरेण नापत्रपसे कथं शक्रेह कर्मणा ।
ऋषिपुत्रमिमं हत्वा ब्रह्महत्याभयं न ते ॥ ३६
शक्र उवाच ।
पश्चाद्धर्मं चरिष्यामि पावनार्थं सुदुश्चरम् ।
शत्रुरेष महावीर्यो वज्रेण निहतो मया ॥ ३७
अद्यापि चाहमुद्विग्नस्तक्षन्नस्माद्बिभेमि वै ।
क्षिप्रं छिन्धि शिरांसि त्वं करिष्येऽनुग्रहं तव ॥३८
शिरः पशोस्ते दास्यन्ति भागं यज्ञेषु मानवाः ।
एष तेऽनुग्रहस्तक्षन्क्षिप्रं कुरु मम प्रियम् ॥ ३९
शल्य उवाच ।
एतच्छ्रुत्वा तु तक्षा स महेन्द्रवचनात्तदा ।
शिरांस्यथ त्रिशिरसः कुठारेणाच्छिनत्तदा॥ ४०
निकृत्तेषु ततस्तेषु निष्क्रामन्नण्डजास्त्वथ ।
कपिञ्जलास्तित्तिराश्च कलविङ्काश्च सर्वशः ॥ ४१
येन वेदानधीते स्म पिबते सोममेव च ।
तस्माद्वक्त्राद्विनिश्चेरुः क्षिप्रं तस्य कपिञ्जलाः॥४२

सौष्ठवं सौन्दर्यम् । प्रहर्षं लब्धभोगोऽस्मीति तोषम् ॥ १६ ॥ वर्धकिः तक्षा ॥ २८ ॥ नभविष्यति नङ्क्ष्यति ॥ ३१ ॥

येन सर्वा दिशो राजन्पिबन्निव निरीक्षते ।
तस्माद्वक्त्राद्विनिश्चेरुस्तित्तिरास्तस्य पाण्डव ॥ ४३
यत्सुरापं तु तस्यासीद्वक्त्रं त्रिशिरसस्तदा ।
कलविङ्काः समुत्पेतुः श्येनाश्च भरतर्षभ ॥ ४४
ततस्तेषु निकृत्तेषु विज्वरो मघवानथ ।
'तक्ष्णे तथा वरं दत्त्वा प्रहृष्टस्त्रिदशेश्वरः ॥' ४५
जगाम त्रिदिवं देवस्तक्षाऽपि स्वगृहान्ययौ ।
मेने कृतार्थमात्मानं हत्वा शत्रुं सुरारिहा ॥ ४६
'तक्षापि स्वगृहं गत्वा नैव शंसति कस्यचित् ।
अथैनं नाभिजानन्ति वर्षमेकं तथागतम् ॥ ४७
अथ संवत्सरे पूर्णे भूताः पशुपतेः प्रभो ।
तमाक्रोशन्त मघवान्नः प्रभुर्ब्रह्महा इति ॥ ४८
तत इन्द्रो व्रतं घोरमाचरत्पाकशासनः ।
तपसा च सुसंयुक्तः सह देवैर्मरुद्गणैः ॥ ४९
समुद्रेषु पृथिव्यां च वनस्पतिषु स्त्रीषु च
विभज्य ब्रह्महत्यां च तान्वरैरप्ययोजयत् ॥ ५०
वरदस्तु वरं दत्त्वा पृथिव्यै सागराय च ।
वनस्पतिभ्यः स्त्रीभ्यश्च ब्रह्महत्यां नुनोद ताम् ॥
ततस्तु शुद्धो भगवान्देवैर्लोकैश्च पूजितः ।
इन्द्रस्थानमुपातिष्ठत्पूज्यमानो महर्षिभिः' ॥ ५२
त्वष्टा प्रजापतिः श्रुत्वा शक्रेणाथ हतं सुतम् ।
क्रोधसंरक्तनयन इदं वचनमब्रवीत् ॥ ५३
त्वष्टोवाच ।
तप्यमानं तपो नित्यं क्षान्तं दान्तं जितेन्द्रियम् ।
विनाऽपराधेन यतः पुत्रं हिंसितवान्मम ॥ ५४
तस्माच्छक्रविनाशाय वृत्रमुत्पादयाम्यहम् ।
लोकाः पश्यन्तु मे वीर्यं तपसश्च बलं महत् ।
स च पश्यतु देवेन्द्रो दुरात्मा पापचेतनः ॥ ५५
उपस्पृश्य ततः क्रुद्धस्तपस्वी सुमहायशाः ।
अग्नौ हुत्वा समुत्पाद्य घोरं वृत्रमुवाच ह ॥ ५६
इन्द्रशत्रो विवर्धस्व प्रभावात्तपसो मम ।
सोऽवर्धत दिवं स्तब्ध्वा सूर्यवैश्वानरोपमः ॥ ५७
किं करोमीति चोवाच कालसूर्य इवोदितः
शक्रं जहीति चाप्युक्तो जगाम त्रिदिवं ततः ५८
ततो युद्धं समभवद्वृत्रवासवयोर्महत् ।
संक्रुद्धयोर्महाघोरं प्रसक्तं कुरुसत्तम ॥ ५९
ततो जग्राह देवेन्द्रं वृत्रो वीरः शतक्रतुम् ।
अपावृत्याक्षिपद्वक्त्रे शक्रं कोपसमन्वितः ॥ ६०
ग्रस्ते वृत्रेण शक्रे तु संभ्रान्तास्त्रिदिवेश्वराः
असृजंस्ते महासत्वा जृम्भिकां वृत्रनाशिनीम् ॥ ६१
विजृम्भमाणस्य ततो वृत्रस्यास्यादपावृतात् ।
स्वान्यङ्गान्यभिसंक्षिप्य निष्क्रान्तो बलनाशनः ॥
ततः प्रभृति लोकस्य जृम्भिका प्राणिसंश्रिता ।
जहृषुश्च सुराः सर्वे शक्रं दृष्ट्वा विनिःसृतम् ॥ ६३
ततः प्रववृते युद्धं वृत्रवासवयोः पुनः ।
संरब्धयोस्तदा घोरं सुचिरं भरतर्षभ ॥ ६४
यदा व्यवर्धत रणे वृत्रो बलसमन्वितः ।
त्वष्टुस्तेजोबलाविद्धस्तदा शक्रो न्यवर्तत ॥ ६५
निवृत्ते च तदा देवा विषादमगमन्परम् ।
समेत्य सह शक्रेण त्वष्टुस्तेजोविमोहिताः ॥ ६६
अमन्त्रयन्त ते सर्वे मुनिभिः सह भारत ।
किं कार्यमिति वै राजन्विचिन्त्य भयमोहिताः ॥
जग्मुः सर्वे महात्मानं मनोभिर्विष्णुमव्ययम् ।
उपविष्टा मन्दराग्रे सर्वे वृत्रवधेप्सवः ॥ ६८

॥ इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ॥ १० ॥

विष्णवाज्ञया ऋषिभिर्वृत्रस्य आसुधाद्यवध्यत्ववरदानपूर्वकं इन्द्रवृत्रयोः सन्धिकरणम् ॥ १ ॥ कदाचन समुद्रतीरे वृत्रं दृष्टवता इन्द्रेण वृत्रोपरि सवज्रे फेने प्रक्षिप्ते तत्प्रविष्टेन विष्णुना वृत्रहननम् ॥ २ ॥ वृत्रवधजन्यब्रह्महत्यापीडितस्येन्द्रस्य स्वर्गात्प्रवासः ॥ ३ ॥

इन्द्र उवाच ।
सर्वं व्याप्तमिदं देवा वृत्रेण जगदव्ययम् ।
न ह्यस्य सदृशं किंचित्प्रतिघाताय यद्भवेत् ॥ १
समर्थो ह्यभवं पूर्वमसमर्थोऽस्मि सांप्रतम् ।

उपस्पृश्य आचम्य ॥ ५६ ॥ अपावृत्य मुखं संप्रसार्य ॥ ६० ॥ नवमोऽध्यायः ॥ ९ ॥

कथं नु कार्यं भद्रं वो दुर्धर्षः स हि मे मतः ॥२
तेजस्वी च महात्मा च युद्धे चामितविक्रमः ।
ग्रसेत्त्रिभुवनं सर्वं सदेवासुरमानुषम् ॥ ३
तस्माद्विनिश्चयमिमं शृणुध्वं त्रिदिवौकसः ।
विष्णोः क्षयमुपागम्य समेत्य च महात्मना ॥ ४
तेन संमन्त्र्य वेत्स्यामो वधोपायं दुरात्मनः ।

शल्य उवाच ।

एवमुक्ते मघवता देवाः सर्षिगणास्तदा ।
शरण्यं शरणं देवं जग्मुर्विष्णुं महाबलम् ॥ ५
ऊचुश्च सर्वे देवेशं विष्णुं वृत्रभयार्दिताः ।
त्रयो लोकास्त्वया क्रान्तास्त्रिभिर्विक्रमणैः पुरा६
अमृतं चाहृतं विष्णो दैत्याश्च निहता रणे ।
बलिं बद्ध्वा महादैत्यं शक्रो देवाधिपः कृतः ॥७
त्वं प्रभुः सर्वदेवानां त्वया सर्वमिदं ततम् ।
त्वं हि देवो महादेव सर्वलोकनमस्कृतः ॥ ८
गतिर्भव त्वं देवानां सेन्द्राणाममरोत्तम ।
जगद्व्याप्तमिदं सर्वं वृत्रेणासुरसूदन ॥ ९

विष्णुरुवाच ।

अवश्यं करणीयं मे भवतां हितमुत्तमम् ।
तस्मादुपायं वक्ष्यामि यथाऽसौ नभविष्यति॥१०
गच्छध्वं सर्षिगन्धर्वा यत्रासौ विश्वरूपधृक् ।
साम तस्य प्रयुञ्जध्वं तत एनं विजेष्यथ ॥ ११
भविष्यति जयो देवाः शक्रस्य मम तेजसा ।
अदृश्यश्च प्रवेक्ष्यामि वज्रे ह्यस्यायुधोत्तमे ॥ १२
गच्छध्वमृषिभिः सार्धं गन्धर्वैश्च सुरोत्तमाः ।
वृत्रस्य सह शक्रेण सन्धिं कुरुत माचिरम् ॥ १३

शल्य उवाच ।

एवमुक्ते तु देवेन ऋषयस्त्रिदशास्तथा ।
ययुः समेत्य सहिताः शक्रं कृत्वा पुरःसरम् ॥१४
समीपमेत्य च यदा सर्व एव महौजसः ।
तं तेजसा प्रज्वलितं प्रतपन्तं दिशो दश ॥ १५
ग्रसन्तमिव लोकांस्त्रीन्सूर्याचन्द्रमसौ यथा ।
ददृशुस्ते ततो वृत्रं शक्रेण सह देवताः ॥ १६

ऋषयोऽथ ततोऽभ्येत्य वृत्रमूचुः प्रियं वचः ।
व्याप्तं जगदिदं सर्वं तेजसा तव दुर्जय ॥ १७
न च शक्नोषि निर्जेतुं वासवं बलिनां वर ।
युध्यतोश्चापि वां कालो व्यतीतः सुमहानिह ॥१८
पीड्यन्ते च प्रजाः सर्वाः सदेवासुरमानुषाः ।
सख्यं भवतु ते वृत्र शक्रेण सह नित्यदा ॥ १९
अवाप्स्यसि सुखं त्वं च शक्रलोकांश्च शाश्वतान्
ऋषिवाक्यं निशम्याथ वृत्रः स तु महाबलः॥२०
उवाच तानृषीन्सर्वान्प्रणम्य शिरसाऽसुरः ।
सर्वे यूयं महाभागा गन्धर्वाश्चैव सर्वशः ॥ २१
यद्ब्रूथ तच्छ्रुतं सर्वं ममापि शृणुतानघाः ।
सन्धिः कथं वै भविता मम शक्रस्य चोभयोः ।
तेजसोर्हि द्वयोर्देवाः सख्यं वै भविता कथम्॥२२

ऋषय ऊचुः ।

सकृत्सतां सङ्गतमीप्सितव्यं
ततः परं भविता भव्यमेव ।
नातिक्रामेत्सत्पुरुषेण सङ्गतं
तस्मात्सतां संगतमीप्सितव्यम् ॥ २३
दृढं सतां सङ्गतं चापि नित्यं
ब्रूयाच्चार्थं ह्यर्थकृच्छ्रेषु धीरः ।
महार्थवत्सत्पुरुषेण सङ्गतं
तस्मात्सन्तं न जिघांसेत धीरः ॥ २४
इन्द्रः सतां संमतश्च निवासश्च महात्मनाम् ।
सत्यवादी ह्यनिन्द्यश्च धर्मवित्सूक्ष्मनिश्चयः ॥ २५
तेन ते सह शक्रेण सन्धिर्भवतु नित्यदा ।
एवं विश्वासमागच्छ मा ते भूद्बुद्धिरन्यथा ॥ २६

शल्य उवाच ।

महर्षिवचनं श्रुत्वा तानुवाच महाद्युतिः ।
अवश्यं भगवन्तो मे माननीयास्तपस्विनः ॥ २७
ब्रवीमि यदहं देवास्तत्सर्वं क्रियते यदि ।
ततः सर्वं करिष्यामि यदूचुर्मां दिवौकसः ॥ २८
न शुष्केण न चार्द्रेण नाश्मना न च दारुणा ।
न शस्त्रेण न चास्त्रेण न दिवा न तथा निशि ॥
वध्यो भवेयं विप्रेन्द्राः शक्रस्य सह दैवतैः ।

क्षयं गृहम् ॥ ४ ॥ दशमोऽध्यायः ॥ १० ॥

एवं मे रोचते सन्धिः शक्रेण सह नित्यदा॥ ३०
बाढमित्येव ऋषयस्तमूचुर्भरतर्षभ ।
एवं वृत्ते तु सन्धाने वृत्रः प्रमुदितोऽभवत्॥ ३१
'ततः सन्धिं मिथः कृत्वा ऋषयो दीप्ततेजसः ।
शक्रस्य सह वृत्रेण पुनर्जग्मुर्यथागतम् ॥' ३२
युक्तः सदाऽभवच्चापि शक्रो हर्षसमन्वितः ।
वृत्रस्य वधसंयुक्तानुपायानन्वचिन्तयत् ॥ ३३
'अभिसन्धिर्महेन्द्रस्य सन्धिकर्मणि यः कृतः ।
ऋषिभिस्त्वीरितं यच्च महेन्द्रस्तदनुस्मरन् ॥' ३४
छिद्रान्वेषी समुद्विग्नः सदा वसति देवराट् ।
स कदाचित्समुद्रान्ते समपश्यन्महासुरम् ॥ ३५
सन्ध्याकाल उपावृत्ते मुहूर्ते चातिदारुणे ।
ततः संचिन्त्य भगवान्वरदानं महात्मनः ॥ ३६
सन्ध्येयं वर्तते रौद्रा न रात्रिर्दिवसं न च ।
वृत्रश्चावश्यवध्योऽयं मम सर्वहरो रिपुः ॥ ३७
यदि वृत्रं न हन्म्यद्य वञ्चयित्वा महासुरम् ।
महाबलं महाकायं न मे श्रेयो भविष्यति ॥ ३८
एवं संचिन्तयन्नेव शक्रो विष्णुमनुस्मरन् ।
अथ फेनं तदाऽपश्यत् समुद्रे पर्वतोपमम् ॥ ३९
नायं शुष्को न चार्द्रोऽयं न च शस्त्रमिदं तथा।
एनं क्षेप्स्यामि वृत्रस्य क्षणादेव नशिष्यति॥ ४०
सवज्रमथ फेनं तं क्षिप्रं वृत्रे निसृष्टवान् ।
प्रविश्य फेनं तं विष्णुरथ वृत्रं व्यनाशयत्॥ ४१
निहते तु ततो वृत्रे दिशो वितिमिराऽभवन् ।
प्रववौ च शिवो वायुः प्रजाश्च जहृषुस्तथा॥ ४२
ततो देवाः सगन्धर्वा यक्षरक्षोमहोरगाः ।
ऋषयश्च महेन्द्रं तमस्तुवन्विविधैः स्तवैः ॥ ४३
नमस्कृतः सर्वभूतैः सर्वभूतान्यसान्त्वयत् ।
हत्वा शत्रुं प्रहृष्टात्मा वासवः सह दैवतैः ॥ ४४
विष्णुं त्रिभुवनश्रेष्ठं पूजयामास धर्मवित् ।
ततो हते महावीर्ये वृत्रे देवभयङ्करे ॥ ४५
अनृतेनाभिभूतोऽभूच्छक्रः परमदुर्मनाः ।
त्रैशीर्षयाऽभिभूतश्च स पूर्वं ब्रह्महत्यया ॥ ४६
'महादेवस्य भूतैश्च स पुनर्ब्रह्महा इति ।
आक्रुष्टो निर्भयैर्भूयो व्रीडितो बलवृत्रहा ॥' ४७
सोऽन्तमाश्रित्य लोकानां नष्टसंज्ञो विचेतनः ।
न प्राज्ञायत देवेन्द्रस्त्वभिभूतः स्वकर्मभिः॥ ४८
प्रतिच्छन्नोऽवसच्चाप्सु चेष्टमान इवोरगः ।
ततः प्रनष्टे देवेन्द्रे ब्रह्महत्या भयार्दिते ॥ ४९
भूमिः प्रध्वस्तसंकाशा निर्वृक्षा शुष्ककानना ।
विच्छिन्नस्रोतसो नद्यः सरांस्यनुदकानि च॥ ५०
संक्षोभश्चापि सत्त्वानामनावृष्टिकृतोऽभवत् ।
देवाश्चापि भृशं त्रस्तास्तथा सर्वे महर्षयः ॥ ५१
अराजकं जगत्सर्वमभिभूतमुपद्रवैः ।
ततो भीताऽभवन्देवाः को नो राजा भवेदिति५२
दिवि देवर्षयश्चापि देवराजविनाकृताः ।
न स्म कश्चन देवानां राज्ये वै कुरुते मतिम्॥५३

॥ इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ॥ ११ ॥

ऋषिभिर्देवैश्च नहुषस्य वरदानपूर्वकमिन्द्रराज्ये अभिषेचनम् ॥ १ ॥ कदाचन स्वावलोकनेन कलुषितमनसा नहुषेण काम्यमानायै इन्द्राण्यै बृहस्पतिना अभयप्रदानम् ॥ २ ॥

शल्य उवाच ।
ऋषयोऽथाब्रुवन्सर्वे देवाश्च त्रिदिवेश्वराः ।
अयं वै नहुषः श्रीमान्देवराज्येऽभिषिच्यताम्॥१
तेजस्वी च यशस्वी च धार्मिकश्चैव नित्यदा ।
ते गत्वा त्वब्रुवन्सर्वे राजा नो भव पार्थिव ॥२
स तानुवाच नहुषो देवानृषिगणांस्तथा ।

---

नोऽस्माकं राजा भव ॥ २ ॥

एकादशोऽध्यायः ॥ ११ ॥

पितृभिः सहितान्राजन्परीप्सन्हितमात्मनः ॥ ३
दुर्बलोऽहं न मे शक्तिर्भवतां परिपालने ।
बलवाञ्जायतां कश्चिद्बलं शक्रे हि नित्यदा ॥ ४
तमब्रुवन्पुनः सर्वे देवा ऋषिपुरोगमाः ।
अस्माकं तपसा युक्तः पाहि राज्यं त्रिविष्टपे ॥ ५
परस्परभयं घोरमस्माकं हि न संशयः ।
अभिषिच्यस्व राजेन्द्र भव राजा त्रिविष्टपे ॥ ६
देवदानवयक्षाणामृषीणां रक्षसां तथा ।
पितृगन्धर्वभूतानां चक्षुर्विषयवर्तिनाम् ॥ ७
तेज आदास्यसे पश्यन्बलवांश्च भविष्यसि ।
धर्मं पुरस्कृत्य सदा सर्वलोकाधिपो भव ॥ ८
ब्रह्मर्षींश्चापि देवांश्च गोपायस्व त्रिविष्टपे ।

शल्य उवाच ।

अभिषिक्तः स राजेन्द्र ततो राजा त्रिविष्टपे ॥ ९
धर्मं पुरस्कृत्य तदा सर्वलोकाधिपोऽभवत् ।
सुदुर्लभं वरं लब्ध्वा प्राप्य राज्यं त्रिविष्टपे ॥ १०
धर्मात्मा सततं भूत्वा कामात्मा समपद्यत ।
देवोद्यानेषु सर्वेषु नन्दनोपवनेषु च ॥ ११
कैलासे हिमवत्पृष्ठे मन्दरे श्वेतपर्वते ।
सह्ये महेन्द्रे मलये समुद्रेषु सरित्सु च ॥ १२
अप्सरोभिः परिवृतो देवकन्यासमावृतः ।
नहुषो देवराजोऽथ क्रीडन्बहुविधं तदा ॥ १३
शृण्वन्दिव्या बहुविधाः कथाः श्रुतिमनोहराः ।
वादित्राणि च सर्वाणि गीतं च मधुरस्वनम् ॥ १४
विश्वावसुर्नारदश्च गन्धर्वाप्सरसां गणाः ।
ऋतवः षट्च देवेन्द्रं मूर्तिमन्त उपस्थिताः ॥ १५
मारुतः सुरभिर्वाति मनोज्ञः सुखशीतलः ।
एवं विक्रीडतस्तस्य नहुषस्य दुरात्मनः ॥ १६
संप्राप्ता दर्शनं देवी शक्रस्य महिषी प्रिया ।
स तां संदृश्य दुष्टात्मा प्राह सर्वान्सभासदः ॥ १७
इन्द्रस्य महिषी देवी कस्मान्मां नोपतिष्ठति ।
अहमिन्द्रोऽस्मि देवानां लोकानां च तथेश्वरः ॥ १८
आगच्छतु शची मह्यं क्षिप्रमद्य निवेशनम् ।
तच्छ्रुत्वा दुर्मना देवी बृहस्पतिमुवाच ह ॥ १९
रक्ष मां नहुषाद्ब्रह्मंस्त्वामस्मि शरणं गता ।
सर्वलक्षणसंपन्नां ब्रह्मंस्त्वं मां प्रभाषसे ॥ २०
देवराजस्य दयितामत्यन्तं सुखभागिनीम् ।
अवैधव्येन युक्तां चाप्येकपत्नीं पतिव्रताम् ॥ २१
उक्तवानसि मां पूर्वमृतां तां कुरु वै गिरम् ।
नोक्तपूर्वं च भगवन्मृषा ते किंचिदीश्वर ॥ २२
तस्मादेतद्भवेत्सत्यं त्वयोक्तं द्विजसत्तम ।
बृहस्पतिरथोवाच इन्द्राणीं भयमोहिताम् ॥ २३
यदुक्तासि मया देवि सत्यं तद्भविता ध्रुवम् ।
द्रक्ष्यसे देवराजं तमिन्द्रं शीघ्रमिहागतम् ॥ २४
न भेतव्यं च नहुषात्सत्यमेतद्ब्रवीमि ते ।
समानयिष्ये शक्रेण नचिराद्भवतीमहम् ॥ २५
अथ शुश्राव नहुष इन्द्राणीं शरणं गताम् ।
बृहस्पतेराङ्गिरसश्चुक्रोध स नृपस्तदा ॥ २६

॥ इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः ॥ १२ ॥

नहुषप्रसादनाय देवादिभिः प्रार्थितेनापि बृहस्पतिना शच्या अत्याजनम् ॥ १ ॥ बृहस्पत्यनुमत्या समयकरणाय शच्याः नहुषसमीपगमनम् ॥ २ ॥

शल्य उवाच ।

क्रुद्धं तु नहुषं दृष्ट्वा देवा ऋषिपुरोगमाः ।
अब्रुवन्देवराजानं नहुषं घोरदर्शनम् ॥
देवराज जहि क्रोधं त्वयि क्रुद्धे जगद्विभो ।
त्रस्तं सासुरगन्धर्वं सकिंनरमहोरगम् ॥
जहि क्रोधमिमं साधो न कुप्यन्ति भवद्विधाः ।
परस्य पत्नी सा देवी प्रसीदस्व सुरेश्वर ॥ ३
निवर्तय मनः पापात्परदाराभिमर्शनात् ।
देवराजोऽसि भद्रं ते प्रजा धर्मेण पालय ॥ ४
एवमुक्तो न जग्राह तद्वचः काममोहितः ।

अथ देवानुवाचेदमिन्द्रं प्रति सुराधिपः ॥ ५
अहल्या धर्षिता पूर्वमृषिपत्नी यशस्विनी ।
जीवतो भर्तुरिन्द्रेण स वः किं न निवारितः॥ ६
बहूनि च नृशंसानि कृतानीन्द्रेण वै पुरा ।
वैधर्म्याण्युपधाश्चैव स वः किं न निवारितः॥ ७
उपतिष्ठतु देवी मामेतदस्या हितं परम् ।
युष्माकं च सदा देवाः शिवमेवं भविष्यति ॥ ८
देवा ऊचुः ।
इन्द्राणीमानयिष्यामो यथेच्छसि दिवस्पते ।
जहि क्रोधमिमं वीर प्रीतो भव सुरेश्वर ॥ ९
शल्य उवाच ।
इत्युक्त्वा तं तदा देवा ऋषिभिः सह भारत ।
जग्मुर्बृहस्पतिं वक्तुमिन्द्राणीं चाशुभं वचः॥ १०
जानीमः शरणं प्राप्तामिन्द्राणीं तव वेश्मनि ।
दत्ताभयां च विप्रेन्द्र त्वया देवर्षिसत्तम ॥ ११
ते त्वां देवाः सगन्धर्वा ऋषयश्च महाद्युते ।
प्रसादयन्ति चेन्द्राणी नहुषाय प्रदीयताम् ॥१२
इन्द्राद्विशिष्टो नहुषो देवराजो महाद्युतिः ।
वृणोत्विमं वरारोहा भर्तृत्वे वरवर्णिनी ॥ १३
एवमुक्ते तु सा देवी बाष्पमुत्सृज्य सस्वनम् ।
उवाच रुदती दीना बृहस्पतिमिदं वचः ॥ १४
नाहमिच्छामि नहुषं पतिं देवर्षिसत्तम ।
शरणागतास्मि ते ब्रह्मंस्त्रायस्व महतो भयात्॥१५
बृहस्पतिरुवाच ।
शरणागतं न त्यजेयमिन्द्राणि मम निश्चयः ।
धर्मज्ञां सत्यशीलां च न त्यजेयमनिन्दिते॥ १६
नाकार्यं कर्तुमिच्छामि ब्राह्मणः सन्विशेषतः ।
श्रुतधर्मा सत्यशीलो जानन्धर्मानुशासनम्॥ १७
नाहमेतत्करिष्यामि गच्छध्वं वै सुरोत्तमाः ।
अस्मिंश्चार्थे पुरा गीतं ब्रह्मणा श्रूयतामिदम्॥१८
न तस्य बीजं रोहति रोहकाले
न तस्य वर्षं वर्षति वर्षकाले ।
भीतं प्रपन्नं प्रददाति शत्रवे
न स त्रातारं लभते त्राणमिच्छन् ॥ १९
मोघमन्नं विन्दति चाप्यचेताः
स्वर्गाल्लोकाद्भ्रश्यति नष्टचेष्टः ।
भीतं प्रपन्नं प्रददाति यो वै
न तस्य हव्यं प्रतिगृह्णन्ति देवाः ॥ २०
प्रमीयते चास्य प्रजा ह्यकाले
सदा विवासं पितरोऽस्य कुर्वते ।
भीतं प्रपन्नं प्रददाति शत्रवे
सेन्द्रा देवाः प्रहरन्त्यस्य वज्रम् ॥ २१
एतदेवं विजानन्वै न दास्यामि शचीमिमाम् ।
इन्द्राणीं विश्रुतां लोके शक्रस्य महिषीं प्रियां २२
अस्या हितं भवेद्यच्च मम चापि हितं भवेत् ।
क्रियतां तत्सुरश्रेष्ठा नहि दास्याम्यहं शचीम् २३
शल्य उवाच ।
अथ देवाः सगन्धर्वा गुरुमाहुरिदं वचः ।
कथं सुनीतं नु भवेन्मन्त्रयस्व बृहस्पते ॥ २४
बृहस्पतिरुवाच ।
नहुषं याचतां देवी किंचित्कालान्तरं शुभा ।
इन्द्राणी हितमेतद्धि तथाऽस्माकं भविष्यति ॥२५
बहुविघ्नः सुराः कालः कालः कालं नयिष्यति ।
गर्वितो बलवांश्चापि नहुषो वरसंश्रयात् ॥ २६
शल्य उवाच ।
ततस्तेन तथोक्ते तु प्रीता देवास्तथाब्रुवन् ।
ब्रह्मन्साध्विदमुक्तं ते हितं सर्वं दिवौकसाम् २७
एवमेतद्द्विजश्रेष्ठ देवी चेयं प्रसाद्यताम् ।
ततः समस्ता इन्द्राणीं देवाश्चाग्निपुरोगमाः ॥२८
ऊचुर्वचनमव्यग्रा लोकानां हितकाम्यया ।
देवा ऊचुः ।
त्वया जगदिदं सर्वं धृतं स्थावरजङ्गमम् ।
एकपत्न्यसि सत्या च गच्छस्व नहुषं प्रति ॥ २९

वैधर्म्याणि त्वाष्ट्रवधादीनि । उपधाः वृत्रसख्यादीनि छलानि ॥ ७ ॥ अचेताः दुर्बलचित्तः ॥ २० ॥ कालान्तरं कालावधिम् ॥ २५ ॥ द्वादशोऽध्यायः ॥ १२ ॥

क्षिप्रं त्वामभिकामश्च विनशिष्यति पापकृत् ।
नहुषो देवि शक्रश्च सुरैश्वर्यमवाप्स्यति ॥ ३०
एवं विनिश्चयं कृत्वा इन्द्राणी कार्यसिद्धये ।
अभ्यगच्छत सव्रीडा नहुषं घोरदर्शनम् ॥ ३१
दृष्ट्वा तां नहुषश्चापि वयोरूपसमन्विताम् ।
समहृष्यत दुष्टात्मा कामोपहतचेतनः ॥ ३२

॥ इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः ॥ १३ ॥

शच्या नहुषंप्रति इन्द्रस्यान्वेषणेऽप्यपरिज्ञाने त्वामुपस्थास्य इति समयकरणम् ॥ १ ॥ देवैर्विष्णवाज्ञया इन्द्रस्य ब्रह्महत्यापनोदनाय अश्वमेधयाजनम् ॥ २ ॥ ध्वस्तपाप्मनोपीन्द्रस्य पुनर्नहुषभयाददर्शने शोचन्त्या शच्या उपश्रुतिदेवीपूजनम् ॥३॥

शल्य उवाच ।
अथ तामब्रवीद्दृष्ट्वा नहुषो देवराट् तदा ।
त्रयाणामपि लोकानामहमिन्द्रः शुचिस्मिते ॥ १
भजस्व मां वरारोहे पतित्वे वरवर्णिनि ।
एवमुक्ता तु सा देवी नहुषेण पतिव्रता ॥ २
प्रावेपत भयोद्विग्ना प्रवाते कदली यथा ।
प्रणम्य सा हि ब्रह्माणं शिरसा तु कृताञ्जलिः ॥३
देवराजमथोवाच नहुषं घोरदर्शनम् ।
कालमिच्छाम्यहं लब्धुं त्वत्तः कंचित्सुरेश्वर ॥ ४
न हि विज्ञायते शक्रः किं वा प्राप्तः क्व वा गतः ।
तत्त्वमेतत्तु विज्ञाय यदि न ज्ञायते प्रभो ॥ ५
ततोऽहं त्वामुपस्थास्ये सत्यमेतद्ब्रवीमि ते ।
एवमुक्तः स इन्द्राण्या नहुषः प्रीतिमानभूत् ॥६
नहुष उवाच ।
एवं भवतु सुश्रोणि यथा मामिह भाषसे ।
ज्ञात्वा चागमनं कार्यं सत्यमेतदनुस्मरेः ॥ ७
नहुषेण विसृष्टा च निश्चक्राम ततः शुभा ।
बृहस्पतिनिकेतं च सा जगाम यशस्विनी ॥ ८
तस्याः संश्रुत्य च वचो देवाश्चाग्निपुरोगमाः ।
चिन्तयामासुरेकाग्राः शक्रार्थं राजसत्तम ॥ ९
देवदेवेन सङ्गम्य विष्णुना प्रभविष्णुना ।
ऊचुश्चैनं समुद्विग्ना वाक्यं वाक्यविशारदाः ॥१०
ब्रह्मवध्याभिभूतो वै शक्रः सुरगणेश्वरः ।
गतिश्च नस्त्वं देवेश पूर्वजो जगतः प्रभुः ॥ ११
रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान् ।
त्वद्वीर्यनिहते वृत्रे वासवो ब्रह्महत्यया ॥ १२
वृतः सुरगणश्रेष्ठ मोक्षं तस्य विनिर्दिश ।
तेषां तद्वचनं श्रुत्वा देवानां विष्णुरब्रवीत् ॥१३
मामेव यजतां शक्रः पावयिष्यामि वज्रिणम् ।
पुण्येन हयमेधेन मामिष्ट्वा पाकशासनः ॥ १४
पुनरेष्यति देवानामिन्द्रत्वमकुतोभयः ।
स्वकर्मभिश्च नहुषो नाशं यास्यति दुर्मतिः ॥ १५
किंचित्कालमिदं देवा मर्षयध्वमतन्द्रिताः ।
श्रुत्वा विष्णोः शुभां सत्यां वाणींताममृतोपमाम्
ततः सर्वे सुरगणाः सोपाध्यायाः सहर्षिभिः ।
यत्र शक्रो भयोद्विग्नस्तं देशमुपचक्रमुः ॥ १७
तत्राश्वमेधः सुमहान्महेन्द्रस्य महात्मनः ।
ववृते पावनार्थं वै ब्रह्महत्यापहो नृप ॥ १८
विभज्य ब्रह्महत्यां तु वृक्षेषु च नदीषु च ।
पर्वतेषु पृथिव्यां च स्त्रीषु चैव युधिष्ठिर ॥ १९
संविभज्य च भूतेषु विसृज्य च सुरेश्वरः ।
विज्वरो धूतपाप्मा च वासवोऽभवदात्मवान् २०
अकम्प्यं नहुषं स्थानाद्दृष्ट्वा बलनिषूदनः ।
तेजोघ्नं सर्वभूतानां वरदानाच्च दुःसहम् ॥ २१
ततः शचीपतिर्देवः पुनरेव व्यनश्यत ।
अदृश्यः सर्वभूतानां कालाकाङ्क्षी चचार ह ॥२२
प्रनष्टे तु ततः शक्रे शची शोकसमन्विता ।
हा शक्रेति तदा देवी विललाप सुदुःखिता ॥२३
यदि दत्तं यदि हुतं गुरवस्तोषिता यदि ।
एकभर्तृत्वमेवास्तु सत्यं यद्यस्ति वा मयि ॥ २४

विष्णुत्वं व्यापकत्वम् ॥ १२ ॥

पुण्यां चेमामहं दिव्यां प्रवृत्तामुत्तरायणे । पतिव्रतात्वात्सत्येन सोपश्रुतिमथाकरोत् ॥ २६
देवीं रात्रिं नमस्यामि सिध्यतां मे मनोरथः ॥२५ यत्रास्ते देवराजोऽसौ तं देशं दर्शयस्व मे ।
प्रयता च निशां देवीमुपातिष्ठत तत्र सा । इत्याहोपश्रुतिं देवीं सत्यं सत्येन दृश्यताम् ॥२७

॥ इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः ॥ १४ ॥

स्तुत्या प्रत्यक्षीभूतया उपश्रुतिदेव्यासह पद्मनालभेदनेन तद्विवरं गतया शच्या तत्रस्थेन्द्रदर्शनम् ॥१॥ तथा इन्द्रं स्तुत्वा नहुषवृत्तान्तकथनम् ॥ २ ॥

शल्य उवाच ।
अथैनां रूपिणी साध्वीमुपातिष्ठदुपश्रुतिः ।
तां वयोरूपसंपन्नां दृष्ट्वा देवीमुपस्थिताम् ॥ १
इन्द्राणी संप्रहृष्टात्मा संपूज्यैनामथाब्रवीत् ।
इच्छामि त्वामहं ज्ञातुं का त्वं ब्रूहि वरानने ॥ २
उपश्रुतिरुवाच ।
उपश्रुतिरहं देवि तवान्तिकमुपागता
दर्शनं चैव संप्राप्ता तव सत्येन भामिनि ॥ ३
पतिव्रता च युक्ता च यमेन नियमेन च ।
दर्शयिष्यामि ते शक्रं देवं वृत्रनिषूदनम् ॥ ४
क्षिप्रमन्वेहि भद्रं ते द्रक्ष्यसे सुरसत्तमम् ।
ततस्तां प्रस्थितां देवीमिन्द्राणी सा समन्वगात् ५
देवारण्यान्यतिक्रम्य पर्वतांश्च बहूंस्ततः ।
हिमवन्तमतिक्रम्य उत्तरं पार्श्वमागमत् ॥ ६
समुद्रं च समासाद्य बहुयोजनविस्तृतम् ।
आससाद महाद्वीपं नानाद्रुमलतावृतम् ॥ ७
तत्रापश्यत्सरो दिव्यं नानाशकुनिभिर्वृतम् ।
शतयोजनविस्तीर्णं तावदेवायतं शुभम् ॥ ८
तत्र दिव्यानि पद्मानि पञ्चवर्णानि भारत ।
षट्पदैरुपगीतानि प्रफुल्लानि सहस्रशः ॥
सरसस्तस्य मध्ये तु पद्मिनी महती शुभा
गौरेणोन्नतनालेन पद्मेन महता वृता ॥ १०
पद्मस्य भित्त्वा नालं च विवेश सहिता तया ।
बिसतन्तुप्रविष्टं च तत्रापश्यच्छतक्रतुम् ॥ ११
तं दृष्ट्वा च सुसूक्ष्मेण रूपेणावस्थितं प्रभुम् ।
सूक्ष्मरूपधरा देवी बभूवोपश्रुतिश्च सा ॥ १२
इन्द्रं तुष्टाव चेन्द्राणी विश्रुतैः पूर्वकर्मभिः
स्तूयमानस्ततो देवः शचीमाह पुरन्दरः ॥ १३
किमर्थमसि संप्राप्ता विज्ञातश्च कथं त्वहम्
ततः सा कथयामास नहुषस्य विचेष्टितम् ॥१४
इद्रत्वं त्रिषु लोकेषु प्राप्य वीर्यसमन्वितः
दर्पाविष्टश्च दुष्टात्मा मामुवाच शतक्रतो ॥ १५
उपतिष्ठेति स क्रूरः कालं च कृतवान्मम ।
यदि न त्रास्यसि विभो करिष्यति स मां वशे १६
एतेन चाहं संप्राप्ता द्रुतं शक्र तवान्तिकम् ।
जहि रौद्रं महाबाहो नहुषं पापनिश्चयम् ॥ १७
प्रकाशयस्व चात्मानं दैत्यदानवसूदन ।
तेजः समाप्नुहि विभो देवराज्यं प्रशाधि च॥१८

॥ इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः ॥ १५ ॥

इन्द्रबोधितशचीवचनात् नहुषेण अगस्त्यादिसप्तर्षीणां स्वशिबिकायां वाहकतया योजनम् ॥ १ ॥ शचीप्रार्थनया बृहस्पतिना होमेन संतोष्याग्नेरिन्द्रान्वेषणाय प्रेषणम् ॥२॥ अग्निना बृहस्पतिंप्रति जलवर्जं सर्वत्रान्वेषणेपीन्द्रानधिगमकथनम् ॥३॥

शल्य उवाच ।
एवमुक्तः स भगवाञ्शच्या तां पुनरब्रवीत् ।
विक्रमस्य न कालोऽयं नहुषो बलवत्तरः ॥ १
विवर्द्धितश्च ऋषिभिर्हव्यकव्यैश्च भामिनि ।

आकरोत् आकारितवती ॥ २६ ॥ त्रयोदशोऽध्यायः ॥ १३ ॥
त्रास्यसि पालयिष्यसि ॥ १६ ॥ चतुर्दशोऽध्यायः ॥ १४ ॥

## अष्टाविंशोऽध्यायः ॥ २८ ॥

युधिष्ठिरेण सञ्जयंप्रति धर्माधर्मनिर्णयस्य इतरासाधारणतया स्वस्य धर्मरहस्यज्ञश्रीकृष्णवचनानुयायित्वकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।

असंशयं सञ्जय सत्यमेत-
द्धर्मो वरः कर्मणां यत्त्वमात्थ ।
ज्ञात्वा तु मां सञ्जय गर्हयेस्त्वं
यदि धर्मं यद्यधर्मं चरामि ॥ १

यत्राधर्मो धर्मरूपाणि धत्ते
धर्मः कृत्स्नो दृश्यतेऽधर्मरूपः ।
बिभ्रद्धर्मो धर्मरूपं तथा च
विद्वांसस्तं संप्रपश्यन्ति बुद्ध्या ॥ २

एवं तथैवापदि लिङ्गमेत-
द्धर्माधर्मौ नित्यवृत्ती भजेताम् ।
आद्यं लिङ्गं यस्य तस्य प्रमाण-
मापद्धर्मं सञ्जय तं निबोध ॥ ३

लुप्तायां तु प्रकृतौ येन कर्म
निष्पादयेत्तत्परीप्सेद्विहीनः ।
प्रकृतिस्थश्चापदि वर्तमान
उभौ गर्ह्यौ भवतः सञ्जयैतौ ॥ ४

अविनाशमिच्छतां ब्राह्मणानां
प्रायश्चित्तं विहितं यद्विधात्रा ।
संपश्येथाः कर्मसु वर्तमाना-
न्विकर्मस्थान्सञ्जय गर्हयेस्त्वम् ॥ ५

मनीषिणां सत्त्वविच्छेदनाय
विधीयते सत्सु वृत्तिः सदैव ।
अब्राह्मणाः सन्ति तु ये न वैद्याः
सर्वोत्सङ्गं साधु मन्येत तेभ्यः ॥ ६

तदध्वानः पितरो ये च पूर्वे
पितामहा ये च तेभ्यः परेऽन्ये ।

धर्माधर्मपरीक्षायां त्रैविध्यमाह यत्रेति । यत्र पुरुषे दम्भादिमति अधर्मः अभिचारार्थं मन्त्रजपादिः धर्म इत्येवान्ये जानन्ति । तथा प्रच्छन्नयोगिनि दत्तात्रेयादौ धर्मो रागद्वेषादिशून्यतारूपो योगधर्मोऽपि उन्मत्तवदाचरणादधर्मरूप इव दृश्यते । यत्र वसिष्ठादौ धर्मः धर्मरूप एव । यद्यपि चाण्डालादौ अधर्मोऽप्यधर्मरूप एवास्ति तथापि तस्यानुपादेयत्वात्त्रयमेव विचार्यम् । एतच्च त्वयापि विदुषा मयि विचार्यमित्याशयः ॥२॥ आपत्कालवशाद्धर्माधर्मयोर्व्यत्यासो जायत इत्याह एवमिति । एतदेवंरूपं लोकप्रत्यक्षं लिङ्गं ब्राह्मणस्य स्वाध्यायप्रवचनादि । क्षत्रियस्य शौर्यादि । वैश्यस्य कृष्यादि । तत्तथैव यथोक्तमेव । तथापि नित्यवृत्ती नित्यं वर्तेते तौ नित्यवृत्ती धर्माधर्मौ तल्लिङ्गं भजेताम् । अयं भावः । क्षत्रलिङ्गं ब्राह्मणवैश्ययोरापदि धर्मः अनापद्यधर्मः । तथा चैकस्यैव लिङ्गस्य वर्णान्तरे अवस्थाभेदाद्धर्मत्वमधर्मत्वं च नित्यमिति । तत्रापि विशेषमाह आद्यमिति । आद्यं ब्राह्मणलिङ्गं याजनादि यस्यास्ति ब्राह्मणस्य तस्यैव तत् प्रमाणं अव्यभिचारि । आपद्यपि क्षत्रियेण याजनाध्यापनादिकं न कर्तव्यमित्यर्थः । एवंविधं तं आपद्धर्मं शास्त्रान्निबोध बुध्यस्व ॥ ३ ॥ प्रकृतिः जीविकाहेतुभूतं धनम् । तच्च क्षत्रियस्य भूमिशस्त्रादिकम् । वैश्यस्य धनपश्वादिकम् । तस्मिन्सर्वात्मना नष्टे सति येन कर्म संध्योपासनादिकं निष्पादयेत् तत् भिक्षाटनादिकमपि परीप्सेत्कर्तुमिच्छेत् । अन्यथा जीविकाया अभावात्कर्मलोपः प्राणनाशश्च स्यादतोऽत्यन्तापदि तावान् विप्रधर्मोऽपीतरैरनुष्ठेयएव । प्रकृतिस्थश्चेति । आपदि आपद्धर्मे प्रकृतिस्थोऽपि यद्यापद्धर्ममनुसरेत्स लोभाद्गर्ह्यः । आपत्स्थोऽपि यदि प्राकृतं धर्ममनुसरेत्स जीवनलोपात् कुटुम्बहिंसया च गर्ह्य इत्यर्थः । यो न कर्मेति क. ङ. पाठः ॥ ४ ॥ यत् यस्माद्धेतोः । विधात्रा अविनाशं ब्राह्मण्यविनाशाभावमिच्छतां ब्राह्मणानां आपदुत्तीर्णानां प्रायश्चित्तं विहितम् । तस्माद्धेतोरापदि अन्यस्यान्यधर्माश्रयणं प्रसक्तमेवेति ज्ञायते । अतएव एकचक्रायामस्माभिः कृतं भिक्षाटनं नानुचितमित्यर्थः । एवमनापदि कर्मसु वर्तमानान् आपदि च विकर्मस्थान् संपश्येथाः सम्यगेवेदमिति पश्येथाः । अन्यथा तु आपदि कर्मस्थान् आत्मपरहिंस्रान् अनापदि विकर्मस्थांश्चातिलुब्धान् विगर्हयेस्त्वम् । आपद्येतान्कर्मसु इति क. ङ. पाठः ॥ ५ ॥ किंच मनीषिणां मनसः निग्रहं नाशं कर्तुमिच्छताम् । ईष गतिहिंसादर्शनेष्वित्यस्य रूपम् । सत्त्वविच्छेदनाय सत्त्वस्य बुद्धिसत्त्वस्य चिदात्मना सह एकलोलीभूतस्य विच्छेदनाय मुञ्जेषीकान्यायेन पृथक्करणाय सत्सु सतां गृहेषु वृत्तिर्जीविका शास्त्रे विधीयते । वेदानिमं लोकममुं च परित्यज्यात्मनात्मानमन्विच्छेदितिश्रुत्यात्मान्वेषणाय सर्वसंन्यासपूर्वकं भिक्षाचर्यविधानात् । न ब्राह्मी वृत्तिः कस्यापि निन्द्या । येतु अब्राह्मणा अपि वैद्याः विद्यानिष्ठाः न भवन्ति तेषां भिक्षाचर्यस्याविधानात् तेभ्यः तेषामर्थे सर्वोत्सङ्गं सर्वेषामुत्सङ्गं समीपं स्वधर्मसंयोगं आपदनापदोरुचितं साधु मन्येत । सर्वोच्छेदमिति क. ङ. पाठे तेभ्यस्तेषामर्थे भिक्षाद्यटनं सर्वधर्मोच्छेदाय मन्येतेत्यर्थः ॥ ६ ॥ तदध्वान इति । पित्रादयः यज्ञैषिणो ये ते सर्वे तदध्वानः स एव मयोक्तोऽध्वा मार्गो येषां ते तदध्वानोऽभूवन् । हि प्रसिद्धम् । ये च कर्म न कुर्युः संन्यासिन इत्यर्थः ।

यज्ञैषिणो ये च हि कर्म कुर्यु-
र्नान्यं ततो नास्तिकोऽस्मीति मन्ये ॥ ७
यत्किंचनेदं वित्तमस्यां पृथिव्यां
यद्देवानां त्रिदशानां परं यत् ।
प्राजापत्यं त्रिदिवं ब्रह्मलोकं
नाधर्मतः सञ्जय कामयेयम् ॥ ८
धर्मेश्वरः कुशलो नीतिमांश्चा-
प्युपासिता ब्राह्मणानां मनीषी ।
नानाविधांश्चैव महाबलांश्च
राजन्यभोजाननुशास्ति कृष्णः ॥ ९
यदि ह्यहं विसृजन्साम गर्ह्यो
नियुध्यमानो यदि जह्यां स्वधर्मम् ।
महायशाः केशवस्तद्ब्रवीतु
वस्तूभयोरर्थकामः ॥ १०
शैनेयोऽयं चेदयश्चान्धकाश्च
वार्ष्णेयभोजाः कुकुराः सृञ्जयाश्च ।
उपासीना वासुदेवस्य बुद्धिं
निगृह्य शत्रून्सुहृदो नन्दयन्ति ॥ ११
वृष्ण्यन्धका ह्युग्रसेनादयो वै
कृष्णप्रणीताः सर्व एवेन्द्रकल्पाः ।
मनस्विनः सत्यपरायणाश्च
महाबला यादवा भोगवन्तः ॥ १२
काश्यो बभ्रुः श्रियमुत्तमां गतो
लब्ध्वा कृष्णं भ्रातरमीशितारम् ।
यस्मै कामान्वर्षति वासुदेवो
ग्रीष्मात्यये मेघ इव प्रजाभ्यः ॥ १३
ईदृशोऽयं केशवस्तात विद्वान्
विद्धि ह्येनं कर्मणां निश्चयज्ञम् ।
प्रियश्च नः साधुतमश्च कृष्णो
नातिक्रामे वचनं केशवस्य ॥ १४

॥ इति श्रीमन्महाभारते उद्योगपर्वणि सञ्जययानपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

## एकोनत्रिंशोऽध्यायः ॥ २९ ॥

श्रीकृष्णेन स्वस्य कुरुपाण्डवेषु तुल्यवृत्तित्वकथनपूर्वकं कर्मणामवश्यानुष्ठेयत्वसमर्थनम् ॥ १ ॥ तथा सञ्जयंप्रति दुर्योधनादिकृतानयस्मारणपूर्वकं स्वस्य सन्ध्यर्थं तत्रागमनकथनम् ॥ २ ॥ तथा पाण्डवानां शमाशमान्यतरपक्षानुसारित्वकथनपूर्वकं धृतराष्ट्रंप्रति यथाभिलषितकरणकथनचोदनम् ॥ ३ ॥

वासुदेव उवाच ।
अविनाशं सञ्जय पाण्डवाना-
मिच्छाम्यहं भूतिमेषां प्रियं च ।
तथा राज्ञो धृतराष्ट्रस्य सूत
समाशंसे बहुपुत्रस्य वृद्धिम् ॥
कामो हि मे सञ्जय नित्यमेव
नान्यद्ब्रूयां तान्प्रति शाम्यतेति ।
राज्ञश्च हि प्रियमेतच्छृणोमि
मन्ये चैतत्पाण्डवानां समक्षम् ॥ २
सुदुष्करस्तत्र शमो हि नूनं
प्रदर्शितः सञ्जय पाण्डवेन ।
यस्मिन्गृद्धो धृतराष्ट्रः सपुत्रः
कस्मादेषां कलहो नावमूर्च्छेत् ॥ ३
न त्वं धर्मं विचरं सञ्जयेह
मत्तश्च जानासि युधिष्ठिराच्च ।
अथो कस्मात्सञ्जय पाण्डवस्य
उत्साहिनः पूरयतः स्वकर्म ॥ ४

---

ते सर्वे तदध्वानः। अहमपि आस्तिकोऽस्मीति ततोऽन्यं अध्वानं न मन्ये ॥ ७ ॥ धर्मेश्वरः धर्मफलस्य दाता ॥ ९ ॥ कृष्णप्रणीताः कृष्णेनैव नीतिपथं नीताः॥१२॥ अष्टाविंशोऽध्यायः॥२८॥

शाम्यतेति वचनादन्यत्तान्प्रति न ब्रूयाम् । पाण्डवानां समक्षं राज्ञो युधिष्ठिराच्च एतदेव शृणोमि । अहं च एतन्मन्ये मानयामि ॥ २ ॥ तत्र राज्ये निमित्ते। गृद्धः लिप्सावान्। एवं सति एषां कौरवाणां कस्माद्धेतोः कलहः नावमूर्च्छेत् ॥ ३ ॥ विचरं विचलितम्। पूरयतः पालयतः ॥ ४ ॥

यथाख्यातमावसतः कुटुम्बे
पुरा कस्मात्साधुविलोपमात्थ ।
अस्मिन्विधौ वर्तमाने यथाव-
दुच्चावचा मतयो ब्राह्मणानाम् ॥ ५

कर्मणाऽऽहुः सिद्धिमेके परत्र
हित्वा कर्म विद्यया सिद्धिमेके ।
नाभुञ्जानो भक्ष्यभोज्यस्य तृप्ये-
द्विद्वानपीह विहितं ब्राह्मणानाम् ॥ ६

या वै विद्याः साधयन्तीह कर्म
तासां फलं विद्यते नेतरासाम् ।
तत्रेह वै दृष्टफलं तु कर्म
पीत्वोदकं शाम्यति तृष्णयाऽऽर्तः ॥ ७

सोऽयं विधिर्विहितः कर्मणैव
संवर्तते सञ्जय तत्र कर्म ।
तत्र योऽन्यत्कर्मणः साधु मन्ये-
न्मोघं तस्यालपितं दुर्बलस्य ॥ ८

कर्मणाऽमी भान्ति देवाः परत्र
कर्मणैवेह प्लवते मातरिश्वा ।
अहोरात्रे विदधत्कर्मणैव
अतन्द्रितो नित्यमुदेति सूर्यः ॥ ९

मासार्धमासानथ नक्षत्रयोगा-
नतन्द्रितश्चन्द्रमाश्चाभ्युपैति ।
अतन्द्रितो दहते जातवेदाः
समिद्ध्यमानः कर्म कुर्वन्प्रजाभ्यः ॥ १०

अतन्द्रिता भारमिमं महान्तं
बिभर्ति देवी पृथिवी बलेन ।
अतन्द्रिताः शीघ्रमपो वहन्ति
सन्तर्पयन्त्यः सर्वभूतानि नद्यः ॥ ११

अतन्द्रितो वर्षति भूरितेजाः
सन्नादयन्नन्तरिक्षं दिशश्च ।
अतन्द्रितो ब्रह्मचर्यं चचार
श्रेष्ठत्वमिच्छन्बलभिद्देवतानाम् ॥ १२

हित्वा सुखं मनसश्च प्रियाणि
तेन शक्रः कर्मणा श्रैष्ठ्यमाप ।
सत्यं धर्मं पालयन्नप्रमत्तो
दमं तितिक्षां समतां प्रियं च ॥ १३

एतानि सर्वाण्युपसेवमानो
यो देवराज्यं मघवान्प्राप मुख्यम् ।
बृहस्पतिर्ब्रह्मचर्यं चचार
समाहितः संशितात्मा यथावत् ॥ १४

हित्वा सुखं प्रतिरुध्येन्द्रियाणि
तेन देवानामगमद्गौरवं सः ।
तथा नक्षत्राणि कर्मणाऽमुत्र भान्ति
रुद्रादित्या वसवोऽथापि विश्वे ॥ १५

यमो राजा वैश्रवणः कुबेरो
गन्धर्वयक्षाप्सरसश्च सूत ।
ब्रह्मविद्यां ब्रह्मचर्यं क्रियां च
निषेवमाणा ऋषयोऽमुत्र भान्ति ॥ १६

जानन्निमं सर्वलोकस्य धर्मं
विप्रेन्द्राणां क्षत्रियाणां विशां च ।
स कस्मात्त्वं जानतां ज्ञानवान्सन्
व्यायच्छसे सञ्जय कौरवार्थे ॥ १७

आम्नायेषु नित्यसंयोगमस्य
तथाऽश्वमेधे राजसूये च विद्धि ।
संयुज्यते धनुषा वर्मणा च
हस्त्यश्वाद्यै रथशस्त्रैश्च भूयः ॥ १८

ते चेदिमे कौरवाणामुपाय-
मवगच्छेयुरवधेनैव पार्थाः ।
धर्मत्राणं पुण्यमेषां कृतं स्या-
दार्ये वृत्ते भीमसेनं निगृह्य ॥ १९

---

यथाख्यातं प्रसिद्धिमनतिक्रम्य आवसतः अधितिष्ठतः साधुविलोपं धर्मलोपं युधिष्ठिरे कस्माद्धेतोः आत्थ उक्तवान् त्वम् । अस्मिन्विधौ ॥ ५ ॥ व्यायच्छसे निग्रहं करोषि ॥ १७ ॥ विद्या धर्मः शौर्यं च युधिष्ठिरे पुष्कलमस्तीति नायमन्येन शिक्षणीयो जेतुं वा शक्य इत्यर्थः ॥ १८ ॥ कौरवाणां अवधेन उपायम् । राज्यप्राप्ताविति शेषः । एषां एतैः । भीमसेनं आर्ये वृत्ते अहिंसायां निगृह्य पुण्यमेव कृतं स्यात् ॥ १९ ॥

ते चेत्पित्र्ये कर्मणि वर्तमाना
आपद्येरन्दिष्टवशेन मृत्युम् ।
यथाशक्त्यापूरयन्तः स्वकर्म
तदप्येषां निधनं स्यात्प्रशस्तम् ॥ २०

उताहो त्वं मन्यसे शाम्यमेव
राज्ञां युद्धे वर्तते धर्मतन्त्रम् ।
अयुद्धे वा वर्तते धर्मतन्त्रं
तथैव ते वाचमिमां शृणोमि ॥ २१

चातुर्वर्ण्यस्य प्रथमं संविभाग-
मवेक्ष्य त्वं सञ्जय स्वं च कर्म ।
निशम्याथो पाण्डवानां च कर्म
प्रशंस वा निन्द वा या मतिस्ते ॥ २२

अधीयीत ब्राह्मणो वै यजेत
दद्यादीयात्तीर्थमुख्यानि चैव ।
अध्यापयेद्याजयेच्चापि याज्यान्
प्रतिग्रहान्वा विहितान्प्रतीच्छेत् ॥ २३

'अधीयीत क्षत्रियोऽथो यजेत
दद्याद्धनं न तु याचेत किंचित् ।
न याजयेन्न तु चाध्यापयीत
एवं स्मृतः क्षत्रधर्मः पुराणः ॥' २४

तथा राजन्यो रक्षणं वै प्रजानां
कृत्वा धर्मेणाप्रमत्तोऽथ दत्त्वा ।
यज्ञैरिष्ट्वा सर्ववेदानधीत्य
दारान्कृत्वा पुण्यकृदावसेद्गृहान् ॥ २५

स धर्मात्मा धर्ममधीत्य पुण्यं
यदृच्छया व्रजति ब्रह्मलोकम् ।
वैश्योऽधीत्य कृषिगोरक्षपण्यै-
र्वित्तं चिन्वन्पालयन्नप्रमत्तः ॥ २६

प्रियं कुर्वन्ब्राह्मणक्षत्रियाणां
धर्मशीलः पुण्यकृदावसेद्गृहान् ।
परिचर्या वन्दनं ब्राह्मणानां
नाधीयीत प्रतिषिद्धोऽस्य यज्ञः ।
नित्योत्थितो भूतयेऽतन्द्रितः स्या-
देवं स्मृतः शूद्रधर्मः पुराणः ॥ २७

एतान्राजा पालयन्नप्रमत्तो
नियोजयन्सर्ववर्णान्स्वधर्मे ।
अकामात्मा समवृत्तिः प्रजासु
नाधार्मिकाननुरुध्येत कामात् ॥ २८

श्रेयांस्तस्माद्यदि विद्येत कश्चि-
दभिज्ञातः सर्वधर्मोपपन्नः ।
स तं द्रष्टुमनुशिष्यन्प्रजानां
न चैतद्बुध्येदिति तस्मिन्नसाधुः ॥ २९

यदा गृध्येत्परभूतौ नृशंसो
विधिप्रकोपाद्बलमाददानः ।
ततो राज्ञामभवद्युद्धमेत-
त्तत्र जातं वर्म शस्त्रं धनुश्च ।
इन्द्रेणैतद्दस्युवधाय कर्म
उत्पादितं वर्म शस्त्रं धनुश्च ॥ ३०

तत्र पुण्यं दस्युवधेन लभ्यते
सोऽयं दोषः कुरुभिस्तीव्ररूपः ।
अधर्मज्ञैर्धर्ममबुध्यमानैः
प्रादुर्भूतः सञ्जय साधु तन्न ॥ ३१

तत्र राजा धृतराष्ट्रः सपुत्रो
धर्म्यं हरेत्पाण्डवानामकस्मात् ।
नावेक्षन्ते राजधर्मं पुराणं
तदन्वयाः कुरवः सर्व एव ॥ ३२

---

शाम्यमेव शमः कार्यएवेति मन्यसे तर्हि धर्मतन्त्रं धर्मानुष्टानं युद्धपक्षेऽस्ति उत अयुद्धपक्षे । तयोर्मध्ये यदेव वक्ष्यसि तथैव ते वाचं शृणोमि करिष्यामीत्यर्थः ॥ २१ ॥ सः क्षत्रियः । अधीत्य प्राप्य ॥ २६ ॥ तस्मात् राज्ञः श्रेयान् प्रशस्ततरः अभिज्ञातः ज्ञानतः धर्मतश्च यदि कश्चिदस्ति स तं युधिष्ठिरं प्रजानां कर्मणि षष्ठी । प्रजाः द्रष्टुं राज्यं प्राप्तुमित्यर्थः । अनुशिष्यन् अनुशासितुमिच्छन् एतन्मदुक्तं धर्मजातं युधिष्ठिरेऽस्तीति बुध्येत् । नच तस्मिन्नसाधुः युधिष्ठिरेऽसाधुरधर्मो न चास्तीत्यपि बुध्येत् ॥ २९ ॥ परभूतौ परैश्वर्ये नृशंसश्चोरकल्पो राजा विधिप्रकोपात् दैवप्रातिकूल्यात् गृध्येत् । ततो हेतोः राज्ञां परस्परं युद्धं समभवत् । कर्म युद्धम् । वर्म कवचम् । शस्त्रं खड्गादि धनुश्चेति ॥ ३० ॥ कुरुभिर्निमित्तभूतैरयं दोषः वञ्चनारूपः प्रादुर्भूतः ॥ ३१ ॥ धर्म्यं धर्मादागतं पित्र्यं राज्यम् । तदन्वयास्तदनुसारिणः ॥ ३२ ॥

स्तेनो हरेद्यत्र धनं ह्यदृष्टः
प्रसह्य वा यत्र हरेत दृष्टः ।
उभौ गर्ह्यौ भवतः सञ्जयैतौ
किं वै पृथक्त्वं धृतराष्ट्रस्य पुत्रे ॥ ३३

सोऽयं लोभान्मन्यते धर्ममेतं
यमिच्छति क्रोधवशानुगामी ।
भागः पुनः पाण्डवानां निविष्ट-
स्तं नः कस्मादाददीरन्परे वै ॥ ३४

अस्मिन्पदे युध्यतां नो वधोऽपि
श्लाघ्यः पित्र्यं परराज्याद्विशिष्टम् ।
एतान्धर्मान्कौरवाणां पुराणा-
नाचक्षीथाः सञ्जय राजमध्ये ॥ ३५

एते मदान्मृत्युवशाभिपन्नाः
समानीता धार्तराष्ट्रेण मूढाः ।
इदं पुनः कर्म पापीय एव
सभामध्ये पश्य वृत्तं कुरूणाम् ॥ ३६

प्रियां भार्यां द्रौपदीं पाण्डवानां
यशस्विनीं शीलवृत्तोपपन्नाम् ।
यदुपैक्षन्त कुरवो भीष्ममुख्याः
कामानुगेनोपरुद्धां व्रजन्तीम् ॥ ३७

तां चेत्तदा ते सकुमारवृद्धा
अवारयिष्यन्कुरवः समेताः ।
मम प्रियं धृतराष्ट्रोऽकरिष्यत्
पुत्राणां च कृतमस्याभविष्यत् ॥ ३८

दुःशासनः प्रातिलोम्यान्निनाय
सभामध्ये श्वशुराणां च कृष्णाम् ।
सा तत्र नीता करुणं व्यपेक्ष्य
नान्यं क्षत्तुर्नाथमवाप किंचित् ॥ ३९

कार्पण्यादेव सहितास्तत्र भूपा
नाशक्नुवन्प्रतिवक्तुं सभायाम् ।
एकः क्षत्ता धर्म्यमर्थं ब्रुवाणो
धर्मबुद्ध्या प्रत्युवाचाल्पबुद्धिम् ॥ ४०

अबुद्ध्वा त्वं धर्ममेतं सभाया-
मथेच्छसे पाण्डवस्योपदेष्टुम् ।
कृष्णा त्वेतत्कर्म चकार शुद्धं
सुदुष्करं तत्र सभां समेत्य ॥ ४१

येन कृच्छ्रात्पाण्डवानुज्जहार
तथाऽऽत्मानं नौरिव सागरौघात् ।
यत्राब्रवीत्सूतपुत्रः सभायां
कृष्णां स्थितां श्वशुराणां समीपे ॥ ४२

न ते गतिर्विद्यते याज्ञसेनि
प्रपद्येथा धार्तराष्ट्रस्य वेश्म ।
पराजितास्ते पतयो न सन्ति
पतिं चान्यं भामिनि त्वं वृणीष्व ॥ ४३

यो बीभत्सोर्हृदये प्रोत आसी-
दस्थि छिन्दन्मर्मघाती सुघोरः ।
कर्णाच्छरो वाङ्मयस्तिग्मतेजाः
प्रतिष्ठितो हृदये फाल्गुनस्य ॥ ४४

कृष्णाजिनानि परिधित्समानान्
दुःशासनः कटुकान्यभ्यभाषत् ।
एते सर्वे षण्डतिला विनष्टाः
क्षयं गता नरकं दीर्घकालम् ॥ ४५

गान्धारराजः शकुनिर्निकृत्या
यदब्रवीद्द्यूतकाले स पार्थम् ।
पराजितो नकुलः किं तवास्ति
कृष्णया त्वं दीव्य वै याज्ञसेन्या
जानासि त्वं सञ्जय सर्वमेतत्
द्यूते वाक्यं गर्ह्यमेवं यथोक्तम् ॥ ४६

स्वयं त्वहं प्रार्थये तत्र गन्तुं
समाधातुं कार्यमेतद्विपन्नम् ।

---

पृथक्त्वं स्तेनादन्यत्वम् ॥ ३३ ॥ एतं छलेन राज्यापहारम् । निविष्टः वनवासादूर्ध्वं राज्यं ग्राह्यमिति कौरवेषु न्यासरूपेण स्थितः तं भागं नः अस्माकं परे कस्मात् आददीरन् गृहीतवन्तः ॥ ३४ ॥ पदे पदनीये अवश्यग्राह्ये भागे निमित्ते ॥ ३५ ॥ कामानुगेन रजसा । उपरुद्धां गृहकर्मतो निरुद्धाम् ॥ ३७ ॥ प्रातिलोम्यात् अक्रमेण ॥ ३९ ॥ कार्पण्यात् दैन्यात् ॥ ४० ॥ पाण्डवस्य धर्मं उपदेष्टुं इच्छसे ॥ ४१ ॥ विपन्नं नष्टं समाधातुं समीकर्तुम् ॥ ४७ ॥

'जानासि त्वं धार्तराष्ट्रस्य मोहं
दुरात्मनः पापवशानुगस्य ॥' ४७

अहापयित्वा यदि पाण्डवार्थं
शमं कुरूणामपि चेच्छकेयम् ।
पुण्यं च मे स्याच्चरितं महोदयं
मुच्येरंश्च कुरवो मृत्युपाशात् ॥ ४८

अपि मे वाचं भाषमाणस्य काव्यां
धर्मारामामर्थवतीमहिंस्राम् ।
अवेक्षेरन्धार्तराष्ट्राः समक्षं
मां च प्राप्तं कुरवः पूजयेयुः ॥ ४९

अतोऽन्यथा रथिना फाल्गुनेन
भीमेन चैवाहवदंशितेन ।
बलोत्सिक्तान्धार्तराष्ट्रांश्च विद्धि
प्रदह्यमानान्कर्मणा स्वेन पापान् ॥ ५०

पराजितान्पाण्डवेयांस्तु वाचो
रौद्रा रूक्षा भाषते धार्तराष्ट्रः ।
गदाहस्तो भीमसेनोऽप्रमत्तो
दुर्योधनं स्मारयिता हि काले ॥ ५१

सुयोधनो मन्युमयो महाद्रुमः
स्कन्धः कर्णः शकुनिस्तस्य शाखाः ।
दुःशासनः पुष्पफले समृद्धे
मूलं राजा धृतराष्ट्रोऽमनीषी ॥ ५२

युधिष्ठिरो धर्ममयो महाद्रुमः
स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः ।
माद्रीपुत्रौ पुष्पफले समृद्धे
मूलं त्वहं ब्रह्म च ब्राह्मणाश्च ॥ ५३

'वनं राजा धृतराष्ट्रः सपुत्रः
सिंहा वने सञ्जय पाण्डवेयाः ।
सिंहाभिगुप्तं न वनं विनश्येत्
सिंहो न नश्येत वनाभिगुप्तः ॥ ५४

निर्वनो वध्यते सिंहो निःसिंहं वध्यते वनम् ।
तस्मात्सिंहो वनं रक्षेद्वनं सिंहं च पालयेत् ॥' ५५

वनं राजा धृतराष्ट्रः वने व्याघ्राश्च पाण्डवाः ।
मा वनं छिन्धि सव्याघ्रं व्याघ्रा नेशुर्वनं विना ॥

निर्वनो वध्यते व्याघ्रो निर्व्याघ्रं छिद्यते वनम् ।
तस्माद्व्याघ्रो वनं रक्षेद्वनं व्याघ्रं च पालयेत् ॥५७

लताधर्मा धार्तराष्ट्राः सालाः सञ्जय पाण्डवाः ।
न लता वर्धते जातु महाद्रुममनाश्रिता ॥ ५८

स्थिताः शुश्रूषितुं पार्थाः स्थिता योद्धुमरिन्दमाः ।
यत्कृत्यं धृतराष्ट्रस्य तत्करोतु नराधिपः ॥ ५९

स्थिताः शमे महात्मानः पाण्डवा धर्मचारिणः ।
योधाः समर्थास्तद्विद्वन्नाचक्षीथा यथातथम् ६०

॥ इति श्रीमन्महाभारते उद्योगपर्वणि सञ्जययानपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## त्रिंशोऽध्यायः ॥ ३० ॥

सञ्जयेन गमनाय युधिष्ठिराद्यामन्त्रणम् ॥ १ ॥ युधिष्ठिरेण सञ्जयंप्रति आभीक्ष्णं आखञ्जकुब्जं सर्वेषु यथायोग्यं वन्दनादिपूर्वकं स्वस्य कुशलनिवेदनचोदनम् ॥ २ ॥ तथा दुर्योधनंप्रति सन्धिविग्रहान्यतरपक्षस्वीकरणाभ्यनुज्ञानकथनचोदनम् ॥ ३ ॥

सञ्जय उवाच ।

आमन्त्रये त्वां नरदेवदेव
गच्छाम्यहं पाण्डव स्वस्ति तेऽस्तु ।
कच्चिन्न वाचा वृजिनं हि किंचि-
द्दुच्चारितं मे मनसोऽभिषङ्गात् ॥ १

जनार्दनं भीमसेनार्जुनौ च
माद्रीसुतौ सात्यकिं चेकितानम् ।
आमन्त्र्य गच्छामि शिवं सुखं वः
सौम्येन मां पश्यत चक्षुषा नृपाः

उवाच ।

शकेयं शक्तश्चेत्स्याम् ॥ ४८ ॥ काव्यां शौक्रीम् ॥ ४९ ॥ रौद्राः मर्मच्छिदः । रूक्षाः निःस्नेहाः । भाषते द्यूतावसानेऽभाषत ॥५१॥

ब्रह्म वेदः ॥ ५३ ॥ एकोनत्रिंशोऽध्यायः ॥ २९ ॥

अभिषङ्गात् आवेशात् ॥ १ ॥

अनुज्ञातः सञ्जय स्वस्ति गच्छ
न नः स्मरस्यप्रियं जातु विद्वन् ।
विद्मश्च त्वां ते च वयं च सर्वे
शुद्धात्मानं मध्यगतं सभास्थम् ॥
आप्तो दूतः सञ्जय सुप्रियोऽसि
कल्याणवाक् शीलवांस्तृप्तिमांश्च ।
न मुह्येस्त्वं सञ्जय जातु मत्या
न च क्रुद्ध्येरुच्यमानोऽपि तथ्यम् ॥
न मर्मगां जातु वक्ताऽसि रूक्षां
नोपश्रुतिं कटुकां नोत शुष्काम् ।
धर्मारामामर्थवतीमहिंस्रा-
मेतां वाचं तव जानीम सूत ॥
त्वमेव नः प्रियतमोऽसि दूत
इहागच्छेद्विदुरो वा द्वितीयः ।
अभीक्ष्णदृष्टोऽसि पुरातनस्त्वं
धनञ्जयस्यात्मसमः सखाऽसि ॥
इतो गत्वा सञ्जय क्षिप्रमेव
उपातिष्ठेथा ब्राह्मणान्ये तदर्हाः ।
विशुद्धवीर्याश्चरणोपपन्नाः
कुले जाताः सर्वधर्मोपपन्नाः ॥ ७
स्वाध्यायिनो ब्राह्मणा भिक्षवश्च
तपस्विनो ये च नित्या वनेषु ।
अभिवाद्य तान्मद्वचनेन वृद्धां-
स्तथैव तान्कुशलं तात पृच्छेः ॥
पुरोहितं धृतराष्ट्रस्य राज्ञ-
स्तथाचार्यानृत्विजो ये च तस्य ।
तांश्चैवत्वं सहितान्वै यथावत्
सङ्गच्छेथाः कुशलेनैव सूत ॥
अश्रोत्रिया ये च वसन्ति वृद्धा
मनस्विनः शीलबलोपपन्नाः ।
आशंसन्तोऽस्माकमनुस्मरन्तो
यथाशक्ति धर्ममात्रां चरन्तः ॥ १०
श्लाघस्व मां कुशलिनं स तेभ्यो
ह्यनामयं तात पृच्छेर्जघन्यम् ।
ये जीवन्ति व्यवहारेण राष्ट्रे
पशूंश्च ये पालयन्तो वसन्ति ।
'कृषीवला बिभ्रति ये च लोकं
तेषां सर्वेषां कुशलं स्म पृच्छेः ॥' ११
आचार्य इष्टो नयगो विधेयो
वेदानभीप्सन्ब्रह्मचर्यं चचार ।
योऽस्त्रं चतुष्पात्पुनरेव चक्रे
द्रोणः प्रसन्नोऽभिवाद्यस्त्वयासौ ॥ १२
अधीतविद्यश्चरणोपपन्नो
योऽस्त्रं चतुष्पात्पुनरेव चक्रे ।
गन्धर्वपुत्रप्रतिमं तरस्विनं
तमश्वत्थामानं कुशलं स्म पृच्छेः ॥ १३
शारद्वतस्यावसथं स गत्वा
महारथस्यात्मविदां वरस्य ।
त्वं मामभीक्ष्णं परिकीर्तयन्वै
कृपस्य पादौ सञ्जय पाणिना स्पृशेः १४
यस्मिन्शौर्यमानृशंस्यं तपश्च
प्रज्ञा शीलं श्रुतरूपे धृतिश्च ।
पादौ गृहीत्वा कुरुसत्तमस्य
भीष्मस्य मां तत्र निवेदयेथाः ॥ १५
प्रज्ञाचक्षुर्यः प्रणेता कुरूणां
बहुश्रुतो वृद्धसेवी मनीषी ।
तस्मै राज्ञे स्थविरायाभिवाद्य
आचक्षीथाः सञ्जय मामरोगम् ॥ १६
ज्येष्ठः पुत्रो धृतराष्ट्रस्य मन्दो
मूर्खः शठः सञ्जय पापशीलः ।

---

उपश्रुतिं वार्ताम् । रूक्षां मर्मगाम् । कटुकां नीरसाम् ॥ ५ ॥ चरणं ब्रह्मचर्येणाध्ययनम् ॥ ७ ॥ अश्रोत्रियाः अत्रैवर्णिकाः शूद्रादयः । धर्ममात्रां धर्मलेशं चरन्तः ॥१०॥ श्लाघ्यस्व स्तुहि । जघन्यं पश्चात्तेभ्यस्तेषां अनामयं पृच्छेः । व्यवहारेण वाणिज्यादिना पालयन्तः स्थानाधिकारिणः ॥ ११ ॥ चतुष्पात् मन्त्र उपचारः प्रयोगः संहारश्चेति चत्वारः पादा अस्येति अस्त्रम् ॥ १२ ॥ गन्धर्वेति सौन्दर्यं संगीतं च तस्मिन् द्योतितम् ॥ १३ ॥

यस्यापवादः पृथिवीं याति सर्वां
सुयोधनं कुशलं तात पृच्छेः ॥ १७
भ्राता कनीयानपि तस्य मन्द-
स्तथाशीलः सञ्जय सोपि शश्वत् ।
महेष्वासः शूरतमः कुरूणां
दुःशासनः कुशलं तात वाच्यः ॥ १८
यस्य कामो वर्तते नित्यमेव
नान्यः शमाद्भारतानामिति स ।
स बाह्लिकानामृषभो मनीषी
पुनर्यथा माऽभिवदेत्प्रसन्नः ॥ १९
'भूरिश्रवास्तात निपातयोधी
महेष्वासो रथिनामुत्तमोऽग्र्यः ।
गत्वा स तं मद्वचनेन ब्रूयाः
शल्यं तथा मद्वचनात्प्रतीतः ॥ २०
महेष्वासो रथिनामुत्तमोऽग्र्यः
समः शलो रक्षिता पृष्ठमस्य ।
ह्रीनिषेवो देविता यो मताक्षः
सत्यव्रतः पुरुमित्रो जयश्च ।
ये प्रस्थानं तत्र मे नाभ्यनन्दं-
स्तेषां सर्वेषां कुशलं तात पृच्छेः ॥' २१
गुणैरनेकैः प्रवरैश्च युक्तो
विज्ञानवान्नैव च निष्ठुरो यः ।
स्नेहादमर्षं सहते सदैव
स सोमदत्तः पूजनीयो मतो मे ॥ २२
अर्हत्तमः कुरुषु सौमदत्तिः
स नो भ्राता संजय मत्सखा च ।
महेष्वासो रथिनामुत्तमोऽर्हः
सहामात्यः कुशलं तस्य पृच्छेः ॥ २३
ये चैवान्ये कुरुमुख्या युवानः
पुत्राः पौत्रा भ्रातरश्चैव ये नः ।
यंयमेषां मन्यसे येन योग्यं
तत्तत्प्रोच्यानामयं सूत वाच्याः ॥ २४

ये राजानः पाण्डवायोधनाय
समानीता धार्तराष्ट्रेण केचित् ।
वशातयः साल्वकाः केकयाश्च
तथाम्बष्ठा ये त्रिगर्ताश्च मुख्याः ॥ २५
प्राच्योदीच्या दाक्षिण्यात्याश्च शूरा-
स्तथा प्रतीच्याः पार्वतीयाश्च सर्वे ।
अनृशंसाः शीलवृत्तोपपन्ना-
स्तेषां सर्वेषां कुशलं सूत पृच्छेः ॥ २६
हस्त्यारोहा रथिनः सादिनश्च
पदातयश्चार्यसङ्घा महान्तः ।
आख्याय मां कुशलिनं स्म नित्य-
मनामयं परिपृच्छेः समग्रान् ॥ २७
तथा राज्ञो ह्यर्थयुक्तानमात्यान्
दौवारिकान्ये च सेनां नयन्ति ।
आयव्ययं ये गणयन्ति नित्य-
मर्थांश्च ये महतश्चिन्तयन्ति ॥ २८
वृन्दारक कुरुमध्यष्वमूढ
महाप्रज्ञं सर्वधर्मोपपन्नम् ।
न तस्य युद्धं रोचते वै कदाचि-
द्वैश्यापुत्रं कुशलं तात पृच्छेः ॥ २९
निकर्तने देवने योऽद्वितीय-
श्छन्नोपधः साधुदेवी मताक्षः ।
यो दुर्जयो देवरथेन सङ्ख्ये
स चित्रसेनः कुशलं तात वाच्यः ॥ ३०
गान्धारराजः शकुनिः पार्वतीयो
निकर्तने योऽद्वितीयोऽक्षदेवी ।
मानं कुर्वन्धार्तराष्ट्रस्य सूत
मिथ्याबुद्धेः कुशलं तात पृच्छेः ॥ ३१
यः पाण्डवानेकरथेन वीरः
समुत्सहत्यप्रधृष्यान्विजेतुम् ।
यो मुह्यतां मोहयिताऽद्वितीयो
वैकर्तनः कुशलं तस्य पृच्छेः ॥ ३२

---

पाण्डवायोधनाय पाण्डवैः सह युद्धाय ॥ २५ ॥ वृन्दारकं श्रेष्ठम् ॥ २९ ॥ निकर्तनेऽर्थापहारे । छन्नोपधो गुप्तछलः ॥ ३० ॥ मुह्यतां धार्तराष्ट्राणाम् ॥ ३२ ॥

स एव भक्तः स गुरुः स भर्ता
स वै पिता स च माता सुहृच्च।
अगाधबुद्धिर्विदुरो दीर्घदर्शी
स नो मन्त्री कुशलं तं स पृच्छेः॥ ३३

वृद्धाः स्त्रियो याश्च गुणोपपन्ना
ज्ञायन्ते नः सञ्जय मातरस्ताः।
ताभिः सर्वाभिः सहिताभिः समेत्य
स्त्रीभिः सवृद्धाभिरभिवादं वदेथाः॥ ३४

कच्चित्पुत्रा जीवपुत्राः सुसम्य-
ग्वर्तन्ते वो वृत्तिमनृशंसरूपाः।
इति स्मोक्त्वा सञ्जय ब्रूहि पश्चा-
दजातशत्रुः कुशली सपुत्रः॥ ३५

राज्ञो भार्याः सञ्जय वेत्थ तत्र
तासां सर्वासां कुशलं तात पृच्छेः
सुसंगुप्ताः सुरभयोऽनवद्याः
कच्चिद्गृहानावसथाप्रमत्ताः॥ ३६

कच्चिद्वृत्तिं श्वशुरेषु भद्राः
कल्याणीं वर्तध्वमनृशंसरूपाम्।
यथा च वः स्युः पतयोऽनुकूला-
स्तथा वृत्तिमात्मनः स्थापयध्वम्॥ ३७

या नः स्नुषाः सञ्जय वेत्थ तत्र
प्राप्ताः कुलेभ्यश्च गुणोपपन्नाः।
प्रजावत्यो ब्रूहि समेत्य ताश्च
युधिष्ठिरो वोऽभ्यवदत्प्रसन्नः॥ ३८

कन्याः स्वजेथाः सदनेषु सञ्जय
अनामयं मद्वचनेन पृष्ट्वा।
कल्याणा वः सन्तु पतयोऽनुकूला
यूयं पतीनां भवतानुकूलाः॥ ३९

अलङ्कृता वस्त्रवत्यः सुगन्धा
अबीभत्साः सुखिता भोगवत्यः।
लघु यासां दर्शनं वाक्च लघ्वी
वेशस्त्रियः कुशलं तात पृच्छेः॥ ४०

दास्यः स्युर्या ये च दासाः कुरूणां
तदाश्रया बहवः कुब्जखञ्जाः।
आख्याय मां कुशलिनं स तेभ्यो-
ऽप्यनामयं परिपृच्छेर्जघन्यम्॥ ४१

कच्चिद्वृत्तिं वर्तते वै पुराणीं
कच्चिद्भोगान्धार्तराष्ट्रो ददाति।
अङ्गहीनान्कृपणान्वामनान्वा
यानानृशंस्याद्धार्तराष्ट्रो बिभर्ति॥ ४२

अन्धाश्च सर्वे बधिरास्तथैव
हस्ताजीवा बहवो येऽत्र सन्ति।
आख्याय मां कुशलिनं स तेभ्यो-
ऽप्यनामयं परिपृच्छेर्जघन्यम्॥ ४३

मा भैष्ट दुःखेन कुजीवितेन
नूनं कृतं परलोकेषु पापम्।
निगृह्य शत्रून्सुहृदोऽनुगृह्य
वासोभिरन्नेन च वो भरिष्ये॥ ४४

'न चाप्येतच्छक्यमेकेन वक्तुं
नानादेशा बहवो जातिसङ्घाः।
विप्रोषितो बालवद्द्रष्टुमिच्छ-
न्नमस्येऽहं सञ्जय भैमसेनान्।
ते मे यथा वाचमिमां यथोक्तां
त्वयोच्यमानां शृणुयुस्तथा कुरु॥' ४५

सन्त्येव मे ब्राह्मणेभ्यः कृतानि
भावीन्यथो नो बत वर्तयन्ति।
तान्पश्यामि युक्तरूपांस्तथैव
तामेव सिद्धिं श्रावयेथा नृपं तम्॥ ४६

ये चानाथा दुर्बलाः सर्वकाल-
मात्मन्येव प्रयतन्तेऽथ मूढाः।
तांश्चापि त्वं कृपणान्सर्वथैव
ह्यस्मद्वाक्यात्कुशलं तात पृच्छेः॥ ४७

ये चाप्यन्ये संश्रिता धार्तराष्ट्रा-
न्नानादिग्भ्योऽभ्यागताः सूतपुत्र।

---

लघु शीघ्रहारि। वेशस्त्रियो वेश्याः॥ ४०॥ शत्रून् धार्तराष्ट्रान् निगृह्य वः युष्मान् भरिष्ये पोषयिष्ये इति ब्रूया इति शेषः॥४४॥ मे मया कृतानि वत्सरदेयानि नो वर्तयन्ति न चालयन्ति। त्वदीया अधिकारिणः तान्यहं यथा यथावत्पश्यामि तथैव तां सिद्धिं त्वद्दत्तं सम्यक् परिपालयामीति दूतद्वारा मां श्रावयेथा इति तं नृपं दुर्योधनं ब्रूहीति शेषः॥४६॥ आत्मन्येव प्रयतन्ते

दृष्ट्वा तांश्चैवार्हतश्चापि सर्वा-
न्संपृच्छेथाः कुशलं चाव्ययं च ॥ ४८
एवं सर्वानागताभ्यागतांश्च
राज्ञो दूतान्सर्वदिग्भ्योभ्युपेतान्
पृष्ट्वा सर्वान्कुशलं तांश्च सूत
पश्चादहं कुशली तेषु वाच्यः ॥ ४९
न हीदृशाः सन्त्यपरे पृथिव्यां
ये योधका धार्तराष्ट्रेण लब्धाः ।
धर्मस्तु नित्यो मम धर्म एव
महाबलः शत्रुनिबर्हणाय ॥ ५०
इदं पुनर्वचनं धार्तराष्ट्रं
सुयोधनं सञ्जय श्रावयेथाः ।
यस्ते शरीरे हृदयं दुनोति
कामः कुरूनसपत्नोऽनुशिष्याम् ॥ ५१
न विद्यते युक्तिरेतस्य काचि-
न्नैवं विधास्यामि यथा प्रियं ते ।
ददस्व वा शक्रपुरीं ममैव
युध्यस्व वा भारतमुख्यवीर ॥ ५२

॥ इति श्रीमन्महाभारते उद्योगपर्वणि सञ्जययानपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

## एकत्रिंशोऽध्यायः ॥ ३१ ॥

युधिष्ठिरेण सञ्जयंप्रति धृतराष्ट्रभीष्मयोरभिवादनपूर्वकं सन्धिकरणविज्ञापननिवेदनचोदनम् ॥ १ ॥ तथा दुर्योधनंप्रति तत्कृतानयोपेक्षणकथनपूर्वकं ग्रामपञ्चकदानेन सन्धिकरणसन्देशः ॥ २ ॥

युधिष्ठिर उवाच ।
उत सन्तमसन्तं वा बालं वृद्धं च सञ्जय ।
उताबलं बलीयांसं धाता प्रकुरुते वशे ॥ १
उत बालाय पाण्डित्यं पण्डितायोत बालताम् ।
ददाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ॥ २
बलं जिज्ञासमानस्य आचक्षीथा यथातथम् ।
अथ मन्त्रं मन्त्रयित्वा याथातथ्येन हृष्टवत् ॥ ३
गावल्गणे कुरून्गत्वा धृतराष्ट्रं महाबलम् ।
अभिवाद्योपसंगृह्य ततः पृच्छेरनामयम् ॥ ४
ब्रूयाश्चैनं त्वमासीनं कुरुभिः परिवारितम् ।
तवैव राजन्वीर्येण सुखं जीवन्ति पाण्डवाः ॥ ५
तव प्रसादाद्बालास्ते प्राप्ता राज्यमरिन्दम ।
राज्ये तान्स्थापयित्वाऽग्रे नोपेक्षस्व विनश्यतः ६
सर्वमप्येतदेकस्य नालं सञ्जय कस्यचित् ।
तात संहत्य जीवामो द्विषतां मा वशं गमः ॥ ७
तथा भीष्मं शान्तनवं भारतानां पितामहम् ।
शिरसाऽभिवदेथास्त्वं मम नाम प्रकीर्तयन् ॥ ८
अभिवाद्य च वक्तव्यस्ततोऽस्माकं पितामहः ।
भवता शन्तनोर्वंशो निमग्नः पुनरुद्धृतः ॥ ९
स त्वं कुरु तथा तात स्वमतेन पितामह ।
यथा जीवन्ति ते पौत्राः प्रीतिमन्तः परस्परम् १०
तथैव विदुरं ब्रूयाः कुरूणां मन्त्रधारिणम् ।
अयुद्धं सौम्य भाषस्व हितकामो युधिष्ठिरे ॥ ११
अथ दुर्योधनं ब्रूया राजपुत्रममर्षणम् ।
मध्ये कुरूणामासीनमनुनीय पुनःपुनः ॥ १२
अपापां यदुपैक्षस्त्वं कृष्णामेतां सभागताम् ।
तद्दुःखमतितिक्षाम मा वधीष्म कुरूनिति ॥ १३
एवं पूर्वापरान्क्लेशानतितिक्षन्त पाण्डवाः ।
बलीयांसोऽपि सन्तो यत्तत्सर्वं कुरवो विदुः ॥ १४
यन्नः प्रव्राजयेः सौम्य अजिनैः प्रतिवासितान् ।

न तु कर्तुं शक्नुवन्ति ॥ ४७ ॥ नित्यः अविनाशिफलः ॥५०॥ युक्तिः संभावना एतस्यार्थस्य न विद्यते । शक्रपुरीं इन्द्रप्रस्थम् ॥ ५२ ॥ त्रिंशोऽध्यायः ॥ ३० ॥

सन्तं साधुम् । असन्तं दुष्टम् । धाता ईश्वरः ॥ १ ॥ शुक्रं बीजभूतं प्राचीनं कर्म उच्चरन् उद्दीपयन् ॥ २ ॥ सर्वं ब्रह्माण्डम् । संहत्य एकीभूय ॥७॥ अतितिक्षाम क्षान्तवन्तो वयम् । तत्र हेतुः मा वधीष्मेति ॥ १३ ॥

तद्दुःखमतितिक्षाम मा वधीष्म कुरूनिति ॥ १५
यत्कुन्तीं समतिक्रम्य कृष्णां केशेष्वधर्षयत् ।
दुःशासनस्तेऽनुमते तच्चास्माभिरुपेक्षितम् ॥ १६
अथोचितं स्वकं भागं लभेमहि परन्तप ।
निवर्तय परद्रव्याद्बुद्धिं गृद्धां नरर्षभ ॥ १७
शान्तिरेवं भवेद्राजन्प्रीतिश्चैव परस्परम् ।
राज्यैकदेशमपि नः प्रयच्छ शममिच्छताम् ॥१८
अविस्थलं वृकस्थलं माकन्दीं वारणावतम् ।
अवसानं भवत्वत्र किंचिदेकं च पञ्चमम् ॥ १९
भ्रातॄणां देहि पञ्चानां पञ्च ग्रामान्सुयोधन ।
शान्तिर्नोऽस्तु महाप्राज्ञ ज्ञातिभिः सह सञ्जय २०
भ्राता भ्रातरमन्वेतु पिता पुत्रेण युज्यताम् ।
स्मयमानाः समायान्तु पाञ्चालाः कुरुभिः सह२१
अक्षतान्कुरु पाञ्चालान्पश्येयमिति कामये ।
सर्वे सुमनसस्तात शाम्याम भरतर्षभ ॥ २२
अलमेव शमायास्मि तथा युद्धाय सञ्जय ।
धर्मार्थयोरलं चाहं मृदवे दारुणाय च ॥ २३

॥ इति श्रीमन्महाभारते उद्योगपर्वणि सञ्जययानपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः ॥ ३२ ॥

पाण्डवानुज्ञातेन सञ्जयेन रात्रौ धृतराष्ट्रमुपगम्य अभिवादनपूर्वकं युधिष्ठिरकृतकुशलप्रश्नादिकथनम् ॥ १ ॥ तथा धृतराष्ट्रं विगर्ह्य युधिष्ठिरवचनस्य श्वःकथनकथनपूर्वकं स्वभवनगमनम् ॥ २ ॥

वैशंपायन उवाच ।
'धर्मराजस्य वचनं श्रुत्वा पार्थो धनञ्जयः ।
उवाच सञ्जयं तत्र वासुदेवस्य शृण्वतः ॥ १
पितामहं शान्तनवं धृतराष्ट्रं च सञ्जय ।
द्रोणं सपुत्रं शल्यं च महाराजं च बाह्लिकम् ॥२
विकर्णं सोमदत्तं च शकुनिं चैव सौबलम् ।
विविंशतिं चित्रसेनं जयत्सेनं च सञ्जय ।
भगदत्तं तथा चैव शूरं रणकृतां वरम् ॥ ३
ये चाप्यन्ये कुरवस्तत्र सन्ति
राजानश्चेद्भूमिपालाः समेताः ।
युयुत्सवः सैन्धवाः पार्थिवाश्च
समानीता धार्तराष्ट्रेण सूत ॥ ४
यथान्यायं कुशलं वन्दनं च
समागमे मद्वचनेन वाच्याः ।
ततो ब्रूयाः सञ्जय राजमध्ये
दुर्योधनं पापकृतां प्रधानम् ॥ ५
एवं प्रतिष्ठाप्य धनञ्जयस्तं
ततोऽर्थवद्धर्मवच्चापि पार्थः ।
उवाच वाक्यं स्वजनप्रहर्षं
वित्रासनं धृतराष्ट्रात्मजानाम् ॥ ६
अर्जुनेन समादिष्टस्तथेत्युक्त्वा तु सञ्जयः ।
पार्थानामन्त्रयामास केशवं च यशस्विनम् ॥' ७
अनुज्ञातः पाण्डवेन प्रययौ सञ्जयस्तदा ।
शासनं धृतराष्ट्रस्य सर्वं कृत्वा महात्मनः ॥ ८
'तदा तु सञ्जयः क्षिप्रमेकाह्नेन परन्तपः ।
याति स हास्तिनपुरं निशाकाले परन्तप ॥' ९
संप्राप्य हास्तिनपुरं शीघ्रमश्वैर्महाजवैः ।
अन्तःपुरं समास्थाय द्वाःस्थं वचनमब्रवीत् ॥१०
आचक्ष्व धृतराष्ट्राय द्वाःस्थ मां समुपागतम् ।
सकाशात्पाण्डुपुत्राणां सञ्जयं माचिरं कृथाः ॥११
जागर्ति चेदभिवदेस्त्वं हि द्वाःस्थ
प्रविशेयं विदितो भूमिपस्य ।
निवेद्यमत्रात्ययिकं हि मेऽस्ति
द्वाःस्थोऽथ श्रुत्वा नृपतिं जगाद ॥ १२
द्वाःस्थ उवाच ।

---

गृद्धां लुब्धाम् ॥ १७ ॥ अवसानं वसतिस्थानम् ॥ १९ ॥
एकत्रिंशोऽध्यायः ॥ ३१ ॥
अनुज्ञातः गच्छेत्युक्तः ॥ ८ ॥ आत्ययिकं आवश्यकम् ॥ १२ ॥

सञ्जयोऽयं भूमिपते नमस्ते
दिदृक्षया द्वारमुपागतस्ते ।
प्राप्तो दूतः पाण्डवानां सकाशात्
प्रशाधि राजन्किमयं करोतु ॥ १३

धृतराष्ट्र उवाच ।

आचक्ष्व मां कुशलिनं कल्पमस्मै
प्रवेश्यतां स्वागतं सञ्जयाय ।
न चाहमेतस्य भवाम्यकल्पः
स मे कस्माद्द्वारि तिष्ठेच्च सक्तः ॥ १४

वैशंपायन उवाच ।

ततः प्रविश्यानुमते नृपस्य
महद्वेश्म प्राज्ञशूरार्यगुप्तम् ।
सिंहासनस्थं पार्थिवमाससाद
वैचित्रवीर्यं प्राञ्जलिः सूतपुत्रः ॥ १५

संजय उवाच ।

सञ्जयोऽहं भूमिपते नमस्ते
प्राप्तोऽस्मि गत्वा नरदेव पाण्डवान् ।
अभिवाद्य त्वां पाण्डुपुत्रो मनस्वी
युधिष्ठिरः कुशलं चान्वपृच्छत् ॥ १६
स ते पुत्रान्पृच्छति प्रीयमाणः
कच्चित्पुत्रैः प्रीयसे नप्तृभिश्च ।
तथा सुहृद्भिः सचिवैश्च राजन्
ये चापि त्वामुपजीवन्ति तैश्च ॥ १७

धृतराष्ट्र उवाच ।

अभिनन्द्य त्वां तात वदामि सञ्जय
अजातशत्रुं च सुखेन पार्थम् ।
कच्चित्स राजा कुशली सपुत्रः
सहामात्यः सानुजः कौरवाणाम् ॥ १८

सञ्जय उवाच ।

सहामात्यः कुशली पाण्डुपुत्रो
बुभूषते यच्च तेऽग्रे त्मनोऽभूत् ।
निर्णिक्तधर्मार्थकरो मनस्वी
बहुश्रुतो दृष्टिमाञ्शीलवांश्च ॥ १९
परो धर्मः पाण्डवस्यानृशंस्यं
धर्मः परो वित्तचयान्मतोऽस्य ।
सुखप्रियेऽधर्महीनेऽनपार्थे
नु रुध्यते भारत तस्य बुद्धिः ॥ २०
परप्रयुक्तः पुरुषो विचेष्टते
सूत्रप्रोता दारुमयीव योषा ।
इमं दृष्ट्वा नियमं पाण्डवस्य
मन्ये परं कर्म दैवं मनुष्यात् ॥ २१
इमं च दृष्ट्वा तव कर्म दोषं
पापोदर्कं घोरमवर्णरूपम् ।
यावत्परः कामयतेऽतिवेलं
तावन्नरोऽयं लभते प्रशंसाम् ॥ २२
अजातशत्रुस्तु विहाय पापं
जीर्णां त्वचं सर्प इवासमर्थाम् ।
विरोचते ह्यार्यवृत्तेन वीरो
युधिष्ठिरस्त्वयि पापं विसृज्य ॥ २३
हन्तात्मनः कर्म निबोध राजन्
धर्मार्थयुक्तादार्यवृत्तादपेतम् ।
उपक्रोशं चेह गतोऽसि राजन्
भूयश्च पापं प्रसजेदमुत्र ॥ २४
स त्वमर्थं संशयितं विना तै-
राशंससे पुत्रवशानुगोऽस्य ।

---

कल्पं दृढम् । अकल्पः दर्शने असमर्थः । सक्तः निरुद्धः ॥ १४ ॥ प्राज्ञाः शूराः आर्याः साधवश्च तैर्गुप्तम् ॥ १५ ॥ नप्तृभिः पुत्रस्य पुत्रैः ॥ १७ ॥ अजातशत्रुं सुखेन अभिनन्द्य त्वां प्रति वदामि ॥ १८ ॥ ते तव अग्रे यत् त्मनः आत्मनः राज्यधनादिकं अभूत् तत् बुभूषते प्राप्तुमिच्छति । निर्णिक्तौ दोषमलहीनौ धर्मार्थौ करोतीति स तथा । मनस्वी उदारः । दृष्टिमान् क्रान्तदर्शी ॥ १९ ॥ परो मुख्यः । आनृशंस्यं दया ततः रोपऽमुख्यः वित्तचयात् जात इति शेषः । वित्तसाध्यः यज्ञदानादिः । किंच तस्य बुद्धिः अनपार्थे न अपार्थे निष्प्रयोजने सप्रयोजने सुखप्रिये । संधिरार्षः । नु निश्चितं । रुध्यते अनुरुध्यते । अन्नादिजं देहपुष्टिसुखं पुत्रादि प्रियं च स परोपकारार्थमेवानुरुध्यते न कामकारेणेत्यर्थः ॥ २० ॥ परेण ईश्वरेण प्रयुक्तः । नियमं निग्रहं मनुष्यात् मनुष्यकारात् दैवं ऐश्वरं कर्म परं श्रेष्ठं मन्ये ॥ २१ ॥ अवर्णरूपं अवर्णनीयरूपं अवाच्यमित्यर्थः । यावत्परः उत्कृष्टः शत्रुः कामयते तिष्ठत्वयं कंचित्कालमितीच्छति तावदपरो नरः प्रशंसां लभते ॥ २२ ॥ तैर्विना

अधर्मशब्दश्च महान्पृथिव्यां
नेदं कर्म त्वत्समं भारताग्र्य ॥ २५
हीनप्रज्ञो दौष्कुलेयो नृशंसो
दीर्घं वैरी क्षत्रविद्यास्वधीरः ।
एवंधर्मानापदः संश्रयेयु-
र्हीनवीर्यो यश्च भवेदशिष्टः ॥ २६
कुले जातो बलवान्यो यशस्वी
बहुश्रुतः सुखजीवी यतात्मा ।
धर्माधर्मौ ग्रथितौ यो बिभर्ति
स ह्यस्य दिष्टस्य वशादुपैति ॥ २७
कथं हि मन्त्राग्र्यधरो मनीषी
धर्मार्थयोरापदि संप्रणेता ।
एवमुक्तः सर्वमन्त्रैरहीनो
नरो नृशंसं कर्म कुर्यादमूढः ॥ २८
तव ह्यमी मन्त्रविदः समेत्य
समासते कर्मसु नित्ययुक्ताः ।
तेषामयं बलवान्निश्चयश्च
कुरुक्षये नियमेनोदपादि ॥ २९
अकालिकं कुरवो नाभविष्यन्
पापेन चेत्पापमजातशत्रुः ।
इच्छेज्जातु त्वयि पापं विसृज्य
निन्दा चेयं तव लोकेऽभविष्यत् ॥ ३०
किमन्यत्र विषयादीश्वराणां
यत्र पार्थः परलोकं स द्रष्टुम् ।
अत्यक्रामत्स तथा संमतः स्या-
न्न संशयो नास्ति मनुष्यकारः ॥ ३१
एतान्गुणान्कर्मकृतानवेक्ष्य
भावाभावौ वर्तमानावनित्यौ ।
बलिर्हि राजा पारमविन्दमानो
नान्यत्कालात्कारणं तत्र मेने ॥ ३२
चक्षुःश्रोत्रे नासिका त्वक् च जिह्वा
ज्ञानस्यैतान्यायतनानि जन्तोः ।
तानि प्रीतान्येव तृष्णाक्षयान्ते
तान्यव्यथो दुःखहीनः प्रणुद्यात् ॥ ३३
नत्वेव मन्ये पुरुषस्य कर्म
संवर्तते सुप्रयुक्तं यथावत् ।
मातुः पितुः कर्मणाभिप्रसूतः
संवर्धते विधिवद्भोजनेन ॥ ३४
प्रियाप्रिये सुखदुःखे च राज-
न्निन्दाप्रशंसे च भजन्त एव ।

एकाकिना संशयितं दुर्लभमपि आशंससे प्राप्तुम् । अस्य तव महान् पृथिव्यां अधर्मशब्दोऽकीर्तिर्भवेत् । त्वत्समं तव युक्तम् ॥ २५ ॥ एवंधर्मान् ईदृशधर्मयुक्तान् पुरुषान् ॥ २६ ॥ सहि सएव दिष्टस्य वशात् भाग्यवशात् अस्य कुलेजातत्वादिगुणजातस्य । कर्मणि षष्ठी । इदं गुणषट्कमुपैति प्राप्नोति । त्वं तु कुले जातोपि केवलं अनृतोपजीवित्वात् गुणान्तरहीनोऽसीति भावः ॥ २७ ॥ मन्त्र एव अग्र्यः श्रेष्ठो येषां ते मन्त्राग्र्याः भीष्मादयः तेषां धरो धर्ता । तैरेवं उक्तरीत्या द्यूतं मा कुर्वित्युक्तः कथं नृशंसं कर्म पाण्डवप्रव्राजनं कुर्यान्न कथमपीत्यर्थः ॥ २८ ॥ अमी कर्णादयः । तेषां कुरुक्षये कुरुक्षयनिमित्तं अयं राज्यं न देयमिति निश्चयः नियमेन उदपादि उत्पन्नः ॥ २९ ॥ अकालिकं अकस्मादेव कुरवो नाभविष्यन् नष्टाःस्युः । तव पापेन कर्मणा प्रेरितोऽजातशत्रुः त्वयि पापं इच्छेच्चेत् । नन्वेवं तर्हि तस्य गोत्रवधदोषः स्यादित्याशङ्क्याह त्वयीति । स्वनाशहेतुं अधर्मं कुर्वति त्वयि चोरे इव पापं विसृज्य राजा निष्पापोऽनिन्द्यश्च स्यादित्यर्थः ॥ ३० ॥ ईश्वराणां देवानां विषयादन्यत्र किम् । सर्वं देवाधीनमित्यर्थः । यत्र यतः पार्थोऽर्जुनः परलोकं द्रष्टुं अत्यक्रामत् । इमं लोकं सशरीर एव त्यक्तवान् । स तादृशः नारदादिवदुभयलोकसंचारयोग्यत्वेन साधूनां संमतोऽपि यदि तथा वनवासेन क्लेशसहः स्यात् तदा मनुष्यकारो नास्तीत्यस्मिन्नर्थे संशयो न ॥ ३१ ॥ एतानिति । एतान् शौर्यादीन् गुणान् कर्मकृतान्कर्मानुसारेण वृद्धिह्रासयुक्तान् अवेक्ष्य अतएव भावाभावौ ऐश्वर्यानैश्वर्ये अनित्यौ आगमापायिनौ च अवेक्ष्य बलिराजा पूर्वपूर्वकर्मकारणपारं अन्तं अविन्दमानः सन् कालात् ईश्वरादन्यत्कारणं अभ्युदयादिहेतुरन्यात्किंचिन्नास्तीति मेने ॥ ३२ ॥ अतः सर्वस्य देवायत्तत्वात् तृष्णाक्षयेणैव इन्द्रियप्रीतिः संपादनीया नतु नानायत्नसाध्यतत्तद्विषयसमर्पणेनेत्याह चक्षुरिति । ननु स्वस्वविषयालाभे तेषां कथं प्रीतिः स्यादित्याशङ्क्य तानि निरोध्यान्येवेत्याह तानीति । अव्यथः लाभालाभादौ वैषम्यहीनः प्रणुद्यात् स्वस्वगोचरेभ्यो निवर्तयेत् ॥ ३३ ॥ एतद्दूषयति नत्विति । एवं प्राप्ते सति अन्ये आहुः । तदेवाह पुरुषस्येति । संवर्तते सम्यक् फलवत् वर्तते । तदेवाह मातुरिति । कर्माभावे जन्मवृद्धी न स्यातामित्यर्थः ॥ ३४ ॥

परस्त्वेनं गर्हयतेऽपराधे
प्रशंसते साधुवृत्तं तमेव ॥ ३५
स त्वां गर्हे भारतानां विरोधा-
दन्तो नूनं भविताऽयं प्रजानाम्
नोचेदिदं तव कर्मापराधात्
कुरून्दहेत्कृष्णवर्त्मेव कक्षम् ॥ ३६
त्वमेवैको जातु पुत्रस्य राजन्
वशं गत्वा सर्वलोके नरेन्द्र ।
कामात्मनः श्लाघनो द्यूतकाले
नागाः शमं पश्य विपाकमस्य ॥ ३७
अनाप्तानां सङ्ग्रहात्त्वं नरेन्द्र
तथाऽऽप्तानां निग्रहाच्चैव राजन् ।
भूमिं स्फीतां दुर्बलत्वादनन्ता-
मशक्तस्त्वं रक्षितुं कौरवेय ॥ ३८
अनुज्ञातो रथवेगावधूतः
श्रान्तोऽभिपद्ये शयनं नृसिंह ।
प्रातः श्रोतारः कुरवः सभाया-
मजातशत्रोर्वचनं समेताः ॥ ३९

धृतराष्ट्र उवाच ।

अनुज्ञातोऽस्यावसथं परेहि
प्रपद्यस्व शयनं सूतपुत्र ।
प्रातः श्रोतारः कुरवः सभाया-
मजातशत्रोर्वचनं त्वयोक्तम् ॥ ४०

॥ इति श्रीमन्महाभारते उद्योगपर्वणि सञ्जययानपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

समाप्तं चेदं सञ्जययानपर्व ॥

# (अतः परं प्रजागरपर्व ॥ ३ ॥)

## त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

धृतराष्ट्रेण रात्रौ विदुरानयनम् ॥ १ ॥ चिन्तया प्रजागरंगतेन धृतराष्ट्रेण दुर्योधनादिसुखोपायप्रश्ने विदुरेण नीतिकथनपूर्वकं पाण्डवेभ्यो राज्यदानस्य तदुपायत्वकथनम् ॥ २ ॥

वैशंपायन उवाच ।

द्वाःस्थं प्राह महाप्राज्ञो धृतराष्ट्रो महीपतिः ।
विदुरं द्रष्टुमिच्छामि तमिहानय मा चिरम् ॥ १
प्रहितो धृतराष्ट्रेण दूतः क्षत्तारमब्रवीत् ।
ईश्वरस्त्वां महाराजो महाप्राज्ञ दिदृक्षति ॥ २
एवमुक्तस्तु विदुरः प्राप्य राजनिवेशनम् ।
अब्रवीद्धृतराष्ट्राय द्वाःस्थं मां प्रतिवेदय ॥ ३

द्वाःस्थ उवाच ।

विदुरोऽयमनुप्राप्तो राजेन्द्र तव शासनात् ।
द्रष्टुमिच्छति ते पादौ किं करोतु प्रशाधि माम् ॥ ४

धृतराष्ट्र उवाच ।

प्रवेशय महाप्रज्ञं विदुरं दीर्घदर्शिनम् ।
अहं हि विदुरस्यास्य नाकल्पो जातु दर्शने ॥ ५

द्वाःस्थ उवाच ।

प्रविशान्तःपुरं क्षत्तर्महाराजस्य धीमतः ।
न हि ते दर्शनेऽकल्पो जातु राजाऽब्रवीद्धि माम् ६

किंच नोचेदिति । इदं मया उच्यमानं कर्म पाण्डवेभ्यो राज्यांशप्रदानात्मकं तव नोचेत् संमतमिति शेषः । तर्हि तवापराधात् कृष्णवर्त्माग्निः कक्षं यथा दहति एवं कृष्णवर्त्मा कृष्ण एव मार्ग इव सुखप्रापको यस्य स कृष्णवर्त्माऽर्जुनः कुरून् दहेदित्यावृत्त्या योज्यम् ॥ ३६ ॥ श्लाघनः आत्मानं कृतार्थं मन्वानः । नागाः न गतवानसि ॥ ३७ ॥ अनाप्तानां कर्णादीनाम् । आप्तानां विदुरादीनाम् । निग्रहात् दूरीकरणात् ॥ ३८ ॥ अवधूतस्तिरस्कृतः । अतएव श्रान्तः । प्रपद्ये प्राप्नुयाम् ॥ ३९ ॥ आवसथं गृहम् । परेहि गच्छ । प्रपद्यस्व सेवस्व ॥ ४० ॥ द्वात्रिंशोऽध्यायः ॥ ३२ ॥

अकल्पो न किंतु कल्पः समर्थ एव । सर्वदा विदुरसंदर्शनं मम अप्रत्याख्येयमित्यर्थः ॥ ५ ॥

वैशंपायन उवाच ।
ततः प्रविश्य विदुरो धृतराष्ट्रनिवेशनम् ।
अब्रवीत्प्राञ्जलिर्वाक्यं चिन्तयानं नराधिपम् ॥७
विदुरोऽहं महाप्राज्ञ संप्राप्तस्तव शासनात् ।
यदि किंचन कर्तव्यमयमस्मि प्रशाधि माम् ॥८
धृतराष्ट्र उवाच ।
सञ्जयो विदुर प्राप्तो गर्हयित्वा च मां गतः ।
अजातशत्रोः श्वो वाक्यं सभामध्ये स वक्ष्यति ९
तस्याद्य कुरुवीरस्य न विज्ञातं वचो मया ।
तन्मे दहति गात्राणि तदकार्षीत्प्रजागरम् ॥ १०
जाग्रतो दह्यमानस्य श्रेयो यदनुपश्यसि ।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलो ह्यसि ॥११
यतः प्राप्तः सञ्जयः पाण्डवेभ्यो
न मे यथावन्मनसः प्रशान्तिः ।
सर्वेन्द्रियाण्यप्रकृतिं गतानि
किं वक्ष्यतीत्येव मेऽद्य प्रचिन्ता ॥ १२
'तन्मे ब्रूहि विदुर त्वं यथाव-
न्मनीषितं सर्वमजातशत्रोः ।
यथा च नस्तात भवेच्च
प्रजाश्च सर्वाः सुखिता भवेयुः ॥' १३
विदुर उवाच ।
अभियुक्तं बलवता दुर्बलं हीनसाधनम् ।
हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः ॥ १४
कच्चिदेतैर्महादोषैर्न स्पृष्टोऽसि नराधिप ।
कच्चिच्च परवित्तेषु गृध्यन्न परितप्यसे ॥ १५
धृतराष्ट्र उवाच ।
श्रोतुमिच्छामि ते धर्म्यं परं नैश्रेयसं वचः ।
अस्मिन्राजर्षिवंशे हि त्वमेकः प्राज्ञसंमतः ॥ १६
विदुर उवाच ।
राजा लक्षणसंपन्नस्त्रैलोक्यस्याधिपो भवेत् ।
प्रेष्यस्ते प्रेषितश्चैव धृतराष्ट्र युधिष्ठिरः ॥ १७
विपरीततरश्च त्वं भागधेये न संमतः ।
अर्चिषां प्रक्षयाच्चैव धर्मात्मा धर्मकोविदः ॥ १८
आनृशंस्यादनुक्रोशाद्धर्मात्सत्यात्पराक्रमात् ।
गुरुत्वात्त्वयि संप्रेक्ष्य बहून्क्लेशांस्तितिक्षते ॥ १९
दुर्योधने सौबले च कर्णे दुःशासने तथा ।
एतेष्वैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि ॥ २०
आत्मज्ञानं समारम्भस्तितिक्षा धर्मनित्यता ।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ २१
'एकस्माद्वृक्षाद्यज्ञपात्राणि राज-
न्स्रुक्च द्रोणी पेठनीपीडने च ।
एतस्माद्राजन्ब्रुवतो मे निबोध
एकस्माद्वै जायतेऽसच्च सच्च ॥ २२
निषेवते प्रशस्तानि निन्दितानि न सेवते ।
अनास्तिकः श्रद्दधान एतत्पण्डितलक्षणम् ॥ २३
क्रोधो हर्षश्च दर्पश्च ह्रीः स्तम्भो मान्यमानिता ।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ २४
यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे ।
कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥२५
यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः ।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥ २६
यस्य संसारिणी प्रज्ञा धर्मार्थावनुवर्तते ।
कामादर्थं वृणीते यः स वै पण्डित उच्यते ॥२७
यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते ।

---

प्रजागरं निद्राया अभावम् ॥ १० ॥ यतः यदा प्राप्तः सञ्जयस्तदारभ्येत्यर्थः । प्रचिन्ता प्रकृष्टा चिन्ता ॥ १२ ॥ अभियुक्तमित्यर्धोपात्त एकः त्रयोऽन्ये च प्रजागरावेशभाजनानि ॥१४॥ गृध्यन् लिप्सावान् ॥ १५ ॥ प्रेष्यः प्रकर्षेण एषणीयः प्रार्थ्य इतियावत् । ते त्वया प्रेषितो वनमिति शेषः ॥ १७ ॥ विपरीतः राजलक्षणहीनः सर्वेषां द्वेष्यः । भागधेये राज्यांशे । अर्चिषां नेत्ररश्मीनां प्रक्षयात् । न संमतस्त्वं धर्मात्मापि सन्निति उपहासः ॥१८॥ आनृशंस्यात् क्रूरत्वाभावात् । अनुक्रोशात् दयालुत्वात् । तितिक्षते युधिष्ठिर इति शेषः ॥१९॥ एतेष्विति । एतेषामधीनो भूत्वेत्यर्थः ॥ २० ॥ एतेषु पाण्डित्यं नास्तीति वक्तुं पण्डितलक्षणान्याह आत्मज्ञानमित्यादिना । आत्मज्ञानं शास्त्रीयापेक्षम् । समारम्भः शक्त्यपेक्षः । तितिक्षा वैराग्यापेक्षा । धर्मनित्यता श्रद्धापेक्षा । एतानि अयथाभूतानि मूढान् पुरुषार्थात् भ्रंशयन्ति नतु पण्डितानित्यर्थः ॥२१॥ अनास्तिकः परलोकाद्यस्तीति जानन् । श्रद्दधानः श्रद्धा गुरुवेदवाक्यादिषु फलावश्यंभावनिश्चयस्तद्वान् ॥२३॥ दर्पः परावज्ञानम् । स्तम्भः असन्नतिः । मान्यमानिता मान्यं मानार्हं आत्मानं मन्यत इति मान्यमानी तस्य भावस्तत्ता ॥ २४ ॥ संसारिणी स्वभावतोऽनवस्थितापि कामात् ऐहिक-

न किंचिदवमन्यन्ते नराः पण्डितबुद्धयः ॥ २८
क्षिप्रं विजानाति चिरं शृणोति
विज्ञाय चार्थं भजते न कामात् ।
नासंपृष्टो व्युपयुङ्क्ते परार्थे
तत्प्रज्ञानं प्रथमं पण्डितस्य ॥ २९
नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः॥ ३०
निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः ।
अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ३१
आर्यकर्मणि रज्यन्ते भूतिकर्माणि कुर्वते ।
हितं च नाभ्यसूयन्ति पण्डिता भरतर्षभ ॥ ३२
न हृष्यत्यात्मसंमाने नावमानेन तप्यते ।
गाङ्गो ह्रद इवाक्षोभ्यो यः स पण्डित उच्यते ॥३३
तत्त्वज्ञः सर्वभूतानां योगज्ञः सर्वकर्मणाम् ।
उपायज्ञो मनुष्याणां नरः पण्डित उच्यते ॥३४
प्रवृत्तवाक् चित्रकथ ऊहवान्प्रतिभानवान् ।
आशु ग्रन्थस्य वक्ता च यः स पण्डित उच्यते ३५
श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा ।
असंभिन्नार्यमर्यादः पण्डिताख्यां लभेत सः ३६
'अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव च ।
विचरत्यसमुन्नद्धो यः स पण्डित उच्यते ॥' ३७
अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः ।
अर्थांश्चाकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥ ३८
स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।
मिथ्या चरति मित्रार्थे यश्च मूढः स उच्यते॥३९
अकामान्कामयति यः कामयानान्परित्यजेत् ।
बलवन्तं च यो द्वेष्टि तमाहुर्मूढचेतसम् ॥ ४०
अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥ ४१
संसारयति कृत्यानि सर्वत्र विचिकित्सते ।
चिरं करोति क्षिप्रार्थे स मूढो भरतर्षभ ॥ ४२
श्राद्धं पितृभ्यो न ददाति दैवतानि न चार्चति।
सुहृन्मित्रं न लभते तमाहुर्मूढचेतसम् ॥ ४३
अनाहूतः प्रविशति अपृष्टो बहु भाषते ।
अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥ ४४
परं क्षिपति दोषेण वर्तमानः स्वयं तथा ।
यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः॥ ४५
आत्मनो बलमाज्ञाय धर्मार्थपरिवर्जितम् ।
अलभ्यमिच्छन्नैष्कर्म्यान्मूढबुद्धिरिहोच्यते ॥ ४६
अशिष्यं शास्ति यो राजन्यश्च शिष्यं न शास्ति च।
कदर्यं भजते यश्च तमाहुर्मूढचेतसम् ॥ ४७
एकः संपन्नमश्नाति वस्ते वासश्च शोभनम् ।
योऽसंविभज्य भृत्येभ्यः को नृशंसतरस्ततः ॥४८
एकः पापानि कुरुते फलं भुङ्क्ते महाजनः ।
भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते॥४९
एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम्॥ ५०
एकया द्वे विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु ।
पञ्च जित्वा विदित्वा षट् सप्त हित्वा सुखी भव॥
एकं विषरसो हन्ति शस्त्रेणैकश्च वध्यते ।

---

सुखात् उभयलोकसुखावहं धर्ममर्थं वृणीते स पण्डितः । कामो धर्मार्थापेक्षया निकृष्ट इत्यर्थः । कामादिति । यस्तु कामं त्यक्त्वा अर्थं वृणीते सः अर्थार्थी मोक्षादेव सर्वं अर्थं विन्दति ज्ञानफले मोक्षे कृत्स्नस्यार्थस्यान्तर्भावात् स जनकादितुल्यः अतः पण्डित उच्यते ॥ २७ ॥ चिरं शृणोति ज्ञानदार्ढ्याय असंपृष्टः यथावदपृष्टः । व्युपयुङ्क्ते वाग्व्ययं करोति । परार्थे विषये प्रज्ञानं चिह्नम् ॥ २९ ॥ निश्चित्य स्वयत्नसाध्यत्वम् । कर्मणः अन्तर्मध्ये न वसति नोपरमते किंतु समापयत्येव । अवन्ध्यकालः सर्वदा सप्रयोजनमेव कर्माचरन् ॥ ३१ ॥ आर्याः शिष्टाः तद्योग्यकर्मणि । भूतिरैश्वर्यं तत्प्राप्त्यर्थं कर्माणि ॥ ३२ ॥ योगो रचनाप्रकारः । उपायस्तदर्थसामग्री । मनुष्याणां मध्ये स नरः पण्डितः ॥ ३४ ॥ प्रवृत्तवाक् अकुण्ठितवचनः । चित्रकथो लोककथाभिज्ञः । ऊहस्तर्कः । प्रतिभानं तत्कालस्फूर्तिः ॥ ३५ ॥ प्रज्ञानुगं बुद्धिवश्यम् । श्रुतानुगा शास्त्रानुसारिणी ॥ ३६ ॥ महामनाः अधिकेच्छावान् । अकर्मणा हीनकर्मणा द्यूतादिनेत्यर्थः ॥ ३८ ॥ संसारयति भृत्यादिद्वारा प्रवर्तयति ॥ ४२ ॥ नैष्कर्म्यात् अयत्नतः ॥ ४६ ॥ कदर्यं अदातारम् ॥ ४७ ॥ एकया बुद्ध्या । द्वे कार्याकार्ये विनिश्चित्य सम्यगवधार्य । त्रीन् मित्रोदासीनशत्रून् । चतुर्भिः सामदानभेददण्डैः । मित्रं साम्नैव दानभेदाभ्यामुदासीनम् सर्वैः शत्रुं वशीकुरु । पञ्च इन्द्रियाणि जित्वा । षड्विदित्वा संधिविग्रहादीन् ज्ञात्वा । सप्त हित्वा–स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् । महच्च

सराष्ट्रं सप्रजं हन्ति राजानं मन्त्रविप्लवः ॥ ५२
एकः स्वादु न भुञ्जीत एकश्चार्थान्न चिन्तयेत् ।
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ५३
एकमेवाद्वितीयं तद्यद्राजन्नावबुध्यसे ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥ ५४
एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ५५
सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलम् ।
क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमा ५६
क्षमा वशीकृतिर्लोके क्षमया किं न साध्यते ।
शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः ५७
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ।
अक्षमावान्परं दोषैरात्मानं चैव योजयेत् ॥ ५८
एको धर्मः परं श्रेयः क्षमैका शान्तिरुत्तमा ।
विद्यैका परमा तृप्तिरहिंसैका सुखावहा ॥ ५९
द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥६०
द्वे कर्मणी नरः कुर्वन्नस्मिँल्लोके विरोचते ।
अब्रुवन्परुषं किंचिदसतोऽनर्चयंस्तथा ॥ ६१
द्वाविमौ पुरुषव्याघ्र परप्रत्ययकारिणौ ।
स्त्रियः कामितकामिन्यो मूर्खाः पूजितपूजकाः ६२
द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषिणौ ।
यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ ६३
द्वावेव न विराजेते विपरीतेन कर्मणा ।
गृहस्थश्च निरारम्भः कार्यवांश्चैव भिक्षुकः ॥ ६४
द्वाविमौ पुरुषौ राजन्स्वर्गस्योपरि तिष्ठतः ।
प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥ ६५
न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥ ६६
द्वावम्भसि निवेष्टव्यौ गले बध्वा दृढां शिलाम् ।
धनवन्तमदातारं दरिद्रं चातपस्विनम् ॥ ६७
द्वाविमौ पुरुषव्याघ्र सूर्यमण्डलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥ ६८
त्रयो न्याया मनुष्याणां श्रूयन्ते भरतर्षभ ।
कनीयान्मध्यमः श्रेष्ठ इति वेदविदो विदुः ॥६९
त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः ।
नियोजयेद्यथावत्तांस्त्रिविधेष्वेव कर्मसु ॥ ७०
त्रय एवाधना राजन्भार्या दासस्तथा सुतः ।
यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥ ७१
हरणं च परस्वानां परदाराभिमर्शनम् ।
सुहृदश्च परित्यागस्त्रयो दोषाः क्षयावहाः ॥ ७२
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥७३
वरप्रदानं राज्यं च पुत्रजन्म च भारत ।
शत्रोश्च मोक्षणं कृच्छ्रात्त्रीणि चैकं च तत्समम् ॥७४
भक्तं च भजमानं च तवास्मीति च वादिनम् ।
त्रीनेताञ्छरणं प्राप्तान्विषमेऽपि न सन्त्यजेत् ॥७५

चत्वारि राज्ञा तु महाबलेन
वर्ज्यान्याहुः पण्डितस्तानि विद्यात् ।
अल्पप्रज्ञैः सह मन्त्रं न कुर्या-
न्न दीर्घसूत्रैरलसैश्चारणैश्च ॥ ७६
चत्वारि ते तात गृहे वसन्तु
श्रियाऽभिजुष्टस्य गृहस्थधर्मे ।
वृद्धो ज्ञातिरवसन्नः कुलीनः
सखा दरिद्रो भगिनी चानपत्या ॥ ७७

चत्वार्याह महाराज साद्यस्कानि बृहस्पतिः ।
पृच्छते त्रिदशेन्द्राय तानीमानि निबोध मे ॥७८
देवतानां च सङ्कल्पमनुभावं च धीमताम् ।

दण्डपारुष्यमर्थदूषणमेव चेति सप्त हेयानि त्यक्त्वा सुखी भव ॥ ५१ ॥ सत्यं यथार्थभाषणम् । पारावारस्य समुद्रस्य ॥ ५४ ॥ युद्धं कनीयान् । भेददाने मध्यमः । साम उत्तमः ॥ ६९ ॥ त्वयिसति त्वत्पुत्रोऽधनोऽतस्त्वमेव पाण्डवानां राज्यं दातुं प्रभुरसीत्यर्थः ॥ ७१ ॥ शरणं गृहम् । विषमेपि संकटेपि ॥ ७५ ॥ दीर्घसूत्रैः क्षिप्रसाध्ये कार्ये चिरं कुर्वद्भिः । अलसैः करिष्यामीति कालगमकैः । चारणैः स्तावकैः । अरणैरितिच्छेदो वा । रणविरोधिभिर्द्यूताद्यासक्तैरित्यर्थः ॥ ७६ ॥ वृद्धः कुलधर्मानुपदिशति । कुलीनः शिशून् आचारं ग्राहयति । सखा हितं वदति । भगिनी धनं रक्षति ॥ ७७ ॥ साद्यस्कानि सद्यःफलानि ॥७८॥ देवताः स्वर्गभाजः । स्वर्गपदार्थश्च—यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्

विनयं कृतविद्यानां विनाशं पापकर्मणाम् ॥७९
चत्वारि कर्माण्यभयंकराणि
भयं प्रयच्छन्त्ययथाकृतानि ।
मानाग्निहोत्रमुत मानमौनं
मानेनाधीतमुत मानयज्ञः ॥ ८०
पञ्चाग्नयो मनुष्येण परिचर्याः प्रयत्नतः ।
पिता माताग्निरात्मा च गुरुश्च भरतर्षभ ॥ ८१
पञ्चैव पूजयँल्लोके यशः प्राप्नोति केवलम् ।
देवान्पितॄन्मनुष्यांश्च भिक्षूनतिथिपञ्चमान् ॥८२
पञ्च त्वाऽनुगमिष्यन्ति यत्र यत्र गमिष्यसि ।
मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः ॥८३
पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम् ।
ततोऽस्य स्रवति प्रज्ञा दृतेः पात्रादिवोदकम् ॥८४
षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्री भयं क्रोध आलस्यं दीर्घसूत्रता ॥८५
षडिमान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ ८६
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥८७
षडेव तु गुणाः पुंसा न हातव्याः कदाचन ।
सत्यं दानमनालस्यमनसूया क्षमा धृतिः ॥ ८८
अर्थागमो नित्यमरोगिता च
प्रिया च भार्या प्रियवादिनी च ।
वश्यश्च पुत्रोऽर्थकरी च विद्या
षड्जीवलोकस्य सुखानि राजन् ॥ ८९
षण्णामात्मनि नित्यानामैश्वर्यं योऽधिगच्छति ।
न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः ॥९०
षडिमे षट्सु जीवन्ति सप्तमो नोपलभ्यते ।
चोराः प्रमत्ते जीवन्ति व्याधितेषु चिकित्सकाः ॥
प्रमदाः कामयानेषु यजमानेषु याजकाः ।
राजा विवदमानेषु नित्यं मूर्खेषु पण्डिताः ॥ ९२
षडिमानि विनश्यन्ति मुहूर्तमनवेक्षणात् ।
गावः सेवा कृषिर्भार्या विद्या वृषलसङ्गतिः ॥९३
षडेते ह्यवमन्यन्ते नित्यं पूर्वोपकारिणम् ।
आचार्यं शिक्षिताः शिष्याः कृतदाराश्च मातरं ९४
नारीं विगतकामास्तु कृतार्थाश्च प्रयोजकम् ।
नावं निस्तीर्णकान्तारा नातुराश्च चिकित्सकं ९५
आरोग्यमानृण्यमविप्रवासः
सद्भिर्मनुष्यैः सह संप्रयोगः ।
स्वप्रत्यया वृत्तिरभीतवासः
षट् जीवलोकस्य सुखानि राजन् ॥ ९६
ई‍र्षी घृणी नसन्तुष्टः क्रोधनो नित्यशङ्कितः ।
परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥ ९७
सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः ।
प्रायशो यैर्विनश्यन्ति कृतमूला अपीश्वराः ॥९८
स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् ।
महच्च दण्डपारुष्यमर्थदूषणमेव च ॥ ९९
अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः ।
ब्राह्मणान्प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥ १००
ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति ।
रमते निन्दया चैषां प्रशंसां नाभिनन्दति १०१
नैनान्स्मरति कृत्येषु याचितश्चाभ्यसूयति ।
एतान्दोषान्नरः प्राज्ञो बुद्ध्या बुध्वा विसर्जयेत् ॥
अष्टाविमानि हर्षस्य नवनीतानि भारत ।
वर्तमानानि दृश्यन्ते तान्येव स्वसुखान्यपि १०३
समागमश्च सखिभिर्महांश्चैव धनागमः ।

---

इत्येवंरूपः । अतस्ते सत्यसंकल्पाः । धीमतामगस्त्यादीनामनुभावं समुद्रपानादिप्रभावम् । तेपि देवतुल्या इत्यर्थः । विनयोपि गुरुप्रसादकरत्वेन सद्यःफलः । विनाशहेतुः कर्मापि चौर्यादिकं तच्च त्वय्येवास्ति । तव सर्वं कर्म मानार्थमेवेति भावः । पापकर्मणां विनाशनं विनाशयितुः सद्यःफलम् ॥ ७९ ॥ पितॄन् अग्निष्वात्तादीन् गोत्रप्रवर्तकानृषींश्च । मनुष्यान् पित्रादीन् ॥ ८२ ॥ त्वा त्वाम् । उपजीव्याः गुरवः । इह लोके साधिता मित्रादयः । इह परलोके जन्मान्तरे वा स्वं स्वं कार्यं कुर्वन्तीत्यर्थः ॥ ८३ ॥ दृतेश्चर्ममयाज्जलपात्रात् ॥ ८४ ॥ गोपालस्य ग्रामे वासे वनवाससाध्यस्य गोरक्षणस्याभावः । नापितस्य वने वासे ग्रामे तत्कार्याभाव इति भावः ॥ ८८ ॥ षण्णामिति । आत्मनि चित्ते नित्यानां षण्णाम्–कामक्रोधौ शोकमोहौ मदमानौ च षट्पदीत्युक्तानाम् । ऐश्वर्यं वशित्वम् ॥ ९० ॥ नातुराः अरोगाः ॥ ९५ ॥ स्वप्रत्यया स्वनिश्चयपूर्विका वृत्तिर्वर्तनं नतु गतानुगतिकयेत्यर्थः ॥९६॥ मनसानिष्टं चिन्तयति । विरुध्यते कर्मणा ॥ १०० ॥

पुत्रेण च परिष्वङ्गः सन्निपातश्च मैथुने ॥ १०४

समये च प्रियालापः स्वयूथ्येषु समुन्नतिः ।
अभिप्रेतस्य लाभश्च पूजा च जनसंसदि ॥ १०५

अष्टौ गुणाः पुरुषं दीपयन्ति
प्रज्ञा च कौल्यं च दमः श्रुतं च ।
पराक्रमश्चाबहुभाषिता च
दानं यथाशक्ति कृतज्ञता च ॥ १०६

नवद्वारमिदं वेश्म त्रिस्थूणं पञ्चसाक्षिकम् ।
क्षेत्रज्ञाधिष्ठितं विद्वान्यो वेद स परः कविः १०७

दश धर्मं न जानन्ति धृतराष्ट्र निबोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥

त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश ।
तस्मादेतेषु भावेषु न प्रसज्जेत पण्डितः ॥ १०९

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
पुत्रार्थमसुरेन्द्रेण गीतं चैव सुधन्वना ॥ ११०

यः काममन्यू प्रजहाति राजा
पात्रे प्रतिष्ठापयते धनं च ।
विशेषविच्छ्रुतवान्क्षिप्रकारी
तं सर्वलोकः कुरुते प्रमाणम् ॥ १११

जानाति विश्वासयितुं मनुष्यान्
विज्ञातदोषेषु दधाति दण्डम् ।
जानाति मात्रां च तथा क्षमां च
तं तादृशं श्रीर्जुषते समग्रा ॥ ११२

सुदुर्बलं नावजानाति कंचि-
द्युक्तो रिपुं सेवते बुद्धिपूर्वम् ।
न विग्रहं रोचयते बलस्थैः
काले च यो विक्रमते स धीरः ॥ ११३

प्राप्यापदं न व्यथते कदाचि-
दुद्योगमन्विच्छति चाप्रमत्तः ।
दुःखं च काले सहते महात्मा
धुरन्धरस्तस्य जिताः सपत्नाः ॥ ११४

अनर्थकं विप्रवासं गृहेभ्यः
पापैः सन्धिं परदाराभिमर्शम् ।
दम्भं स्तैन्यं पैशुनं मद्यपानं
न सेवते यः स सुखी सदैव ॥ ११५

न संरम्भेणारभते त्रिवर्ग-
माकारितः शंसति तत्त्वमेव ।
न मित्रार्थे रोचयते विवादं
नापूजितः कुप्यति चाप्यमूढः ॥ ११६

न योऽभ्यसूयत्यनुकम्पते च
न दुर्बलः प्रातिभाव्यं करोति ।
नात्याह किंचित्क्षमते विवादं
सर्वत्र तादृग्लभते प्रशंसाम् ॥ ११७

यो नोद्धतं कुरुते जातु वेषं
न पौरुषेणापि विकत्थतेऽन्यान् ।
न मूर्च्छितः कटुकान्याह किंचि-
त्प्रियं सदा तं कुरुते जनो हि ॥ ११८

न वैरमुद्दीपयति प्रशान्तं
न दर्पमारोहति शान्तिमेति ।
न दुर्गतोऽस्मीति करोत्यकार्यं
तमार्यशीलं परमाहुरार्याः ॥ ११९

न स्वे सुखे वै कुरुते प्रहर्षं
नान्यस्य दुःखे भवति प्रहृष्टः ।
दत्त्वा न पश्चात्कुरुतेऽनुतापं
स कथ्यते सत्पुरुषार्यशीलः ॥ १२०

देशाचारान्समयाञ्जातिधर्मान्
बुभूषते यः स परावरज्ञः ।
स यत्र तत्राभिगतः सदैव
महाजनस्याधिपत्यं करोति ॥ १२१

---

सन्निपातः समरतं (रत्नगर्भः) ॥ १०४ ॥ त्रिस्थूणं वातपित्तश्लेष्माणः स्थूणा यस्य । पञ्च साक्षिवदुदासीनाः शब्दादयो ग्राह्या यस्मिन् । क्षेत्रज्ञाधिष्ठितं जीवाधिष्ठितम् ॥ १०७॥ मत्तो मद्यादिना । प्रमत्तो विषयान्तरासक्त्याऽनवहितः । उन्मत्तो धातुदोषात् ॥ १०८ ॥ मात्रां अपराधानुसारेण दण्डप्रमाणम्। ब्राह्मणादौ अपराधस्य क्षमां च जानाति ॥ ११२ ॥ युक्तः छिद्रप्रेक्षणेऽवहितः ॥ ११३ ॥ धुरन्धरः कार्यभारसहः ॥११४॥ संरम्भेण क्रोधेन। न च स्त्रियोऽर्थे यतते विवादं इति क. पाठः। न मात्रार्थे रोचयते इति ख. पाठः। मात्रार्थे अल्पार्थे इति रत्नगर्भः ॥ ११६ ॥ प्रातिभाव्यं प्रतिकूलो भावः चित्ताभिप्रायः तस्य भावः प्रातिभाव्यं विरोधम् । अत्याह अतिक्रम्य ब्रवीति ॥ ११७ ॥

दम्भं मोहं मत्सरं पापकृत्यं
राजद्विष्टं पैशुनं पूगवैरम् ।
मत्तोन्मत्तैर्दुर्जनैश्चापि वादं
यः प्रज्ञावान्वर्जयेत्स प्रधानः ॥ १२२
दमं शौचं दैविकं मङ्गलानि
प्रायश्चित्तान्विविधाँल्लोकवादान् ।
एतानि यः कुरुते नैत्यकानि
तस्योत्थानं देवता राधयन्ति ॥ १२३
समैर्विवाहं कुरुते न
समैः सख्यं व्यवहारं कथां च ।
गुणैर्विशिष्टांश्च पुरो दधाति
विपश्चितस्तस्य नयाः सुनीताः ॥ १२४
मितं भुङ्क्ते संविभज्याश्रितेभ्यो
मितं स्वपित्यमितं कर्म कृत्वा ।
ददात्यमित्रेष्वपि याचितः सं-
स्तमात्मवन्तं प्रजहत्यनर्थाः ॥ १२५
चिकीर्षितं विप्रकृतं च यस्य
नान्ये जनाः कर्म जानन्ति किंचित् ।
मन्त्रे गुप्ते सम्यगनुष्ठिते च
नाल्पोऽप्यस्य च्यवते कश्चिदर्थः ॥ १२६
यः सर्वभूतप्रशमे निविष्टः
सत्यो मृदुर्मानकृच्छुद्धभावः ।
अतीव स ज्ञायते ज्ञातिमध्ये
महामणिर्जात्य इव प्रसन्नः ॥ १२७
य आत्मनाऽपत्रपते भृशं नरः
स सर्वलोकस्य गुरुर्भवत्युत ।
अनन्ततेजाः सुमनाः समाहितः
स तेजसा सूर्य इवावभासते ॥ १२८
वने जाताः शापदग्धस्य राज्ञः
पाण्डोः पुत्राः पञ्च पञ्चेन्द्रकल्पाः ।
त्वयैव बाला वर्धिताः शिक्षिताश्च
तवादेशं पालयन्त्याम्बिकेय ॥ १२९
प्रदायैषामुचितं तातराज्यं
सुखी पुत्रैः सहितो मोदमानः ।
न देवानां नापि च मानुषाणां
भविष्यसि त्वं गर्हणीयो नरेन्द्र ॥ १३०

॥ इति श्रीमन्महाभारते उद्योगपर्वणि प्रजागरपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

धृतराष्ट्रेण दुर्योधनादिश्रेयस्साधनप्रश्ने विदुरेण नीतिकथनपूर्वकं युधिष्ठिराय राज्यदानस्य तत्साधनत्वकथनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
जाग्रतो दह्यमानस्य यत्कार्यमनुपश्यसि ।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलः शुचिः ॥ १
तस्माद्यथावद्विदुर प्रशाधि
प्रज्ञापूर्वं सर्वमजातशत्रोः ।
यन्मन्यसे पथ्यमदीनसत्त्व
श्रेयस्करं ब्रूहि तद्वै कुरूणाम् ॥ २
पापाशङ्की पापमेवानुपश्यन्
पृच्छामि त्वां व्याकुलेनात्मनाहम् ।
कवे तन्मे ब्रूहि तत्त्वं यथाव-
न्मनीषितं सर्वमजातशत्रोः ॥ ३
विदुर उवाच ।
शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियम् ।
नापृष्टः कस्यचिद्ब्रूयाद्यः स नेच्छेत्पराभवम् ॥ ४
तस्माद्वक्ष्यामि ते राजन्हितं यत्स्यात्कुरून्प्रति ।
वचः श्रेयस्करं धर्म्यं ब्रुवतस्तन्निबोध मे ॥ ५
मिथ्योपेतानि कर्माणि सिद्ध्येयुर्यानि भारत ।
अनुपायप्रयुक्तानि मा स्म तेषु मनः कृथाः ॥ ६

---

दम्भं परवञ्चनेच्छया धर्मानुष्ठानम् ॥ १२२ ॥ जात्य अभिजातः उत्तमे आकरे जातः ॥ १२७ ॥ आत्मना अपत्रपते परैरज्ञातेऽपि स्वव्यलीके स्वयमेव लज्जते ॥ १२८ ॥ त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

दह्यमानस्य चिन्ताग्निनेति शेषः ॥ १ ॥ अजातशत्रोः पथ्यं कुरूणां च श्रेयस्करम् ॥ २ ॥ पापाशङ्की भाविदुःखादुद्विजन् । पापं स्वकृतं पूर्वापराधं पश्यन् ॥ ३ ॥ मिथ्योपेतानि कपटद्यूतादीनि । अनुपायैः असदुपायैः प्रयुक्तानि दुःखफला-

तथैव योगविहितं यत्तु कर्म न सिध्यति ।
उपाययुक्तं मेधावी न तत्र ग्लपयेन्मनः ॥ ७
अनुबन्धानवेक्षेत सानुबन्धेषु कर्मसु ।
संप्रधार्य च कुर्वीत सहसा न समाचरेत् ॥ ८
अनुबन्धं च संप्रेक्ष्य विपाकं चैव कर्मणाम् ।
उत्थानमात्मन धीरः कुर्वीत वा न वा ॥ ९
यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये ।
कोशे जनपदे दण्डे न स राज्येऽवतिष्ठते ॥ १०
यस्त्वेतानि प्रमाणानि यथोक्तान्यनुपश्यति ।
युक्तो धर्मार्थयोर्ज्ञाने स राज्यमधिगच्छति ॥११
न राज्यं प्राप्तमित्येव वर्तितव्यमसांप्रतम् ।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥१२
भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो बडिशमायसम् ।
अन्नाभिलाषी ग्रसते नानुबन्धमवेक्षते ॥ १३
यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत् ।
हितं च परिणामे यत्तदाद्यं भूतिमिच्छता ॥ १४
वनस्पतेरपक्वानि फलानि प्रचिनोति यः ।
स नाप्नोति रसं तेभ्यो बीजं चास्य विनश्यति॥१५
यस्तु पक्वमुपादत्ते काले परिणतं फलम् ।
फलाद्रसं स लभते बीजाच्चैव फलं पुनः ॥ १६
यथा मधु समादत्ते रक्षन्पुष्पाणि षट्पदः ।
तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया ॥ १७
पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ।
मालाकार इवारामे न यथाङ्गारकारकः ॥ १८
किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
इति कर्माणि सञ्चिन्त्य कुर्याद्वा पुरुषो न वा॥१९
अनारभ्या भवन्त्यर्थाः केचिन्नित्यं तथाऽगताः ।
कृतः पुरुषकारोऽहि भवेद्येषु निरर्थकः ॥ २०
'अनर्थे चैव निरतमर्थे चैव पराङ्मुखम् ।
न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः॥'२१
प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ।
न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ॥२२
कांश्चिदर्थान्नरः प्राज्ञो लघुमूलान्महाफलान् ।
क्षिप्रमारभते कर्तुं न दीर्घयति तादृशान् ॥ २३
ऋजु पश्यति यः सर्वं चक्षुषा नु पिबन्निव ।
आसीनमपि तूष्णीकमनुरज्यन्ति तं प्रजाः ॥२४
सुपुष्पितः स्यादफलः फलितः स्याद्दुरारुहः ।
अपक्वः पक्वसङ्काशो न तु शीर्येत कर्हिचित्॥२५
चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ।
प्रसादयति यो लोकं तं लोकोऽनुप्रसीदति॥ २६
यस्मात्त्रसन्ति भूतानि मृगव्याधान्मृगा इव ।
सागरान्तामपि महीं लब्ध्वा स परिहीयते ॥२७
पितृपैतामहं राज्यं प्राप्यापि स्वेन कर्मणा ।
वायुरभ्रमिवासाद्य भ्रंशयत्यनये स्थितः ॥ २८
धर्ममाचरतो राज्ञः सद्भिश्चरितमादितः ।
वसुधा वसुसंपूर्णा वर्धते भूतिवर्धनी ॥ २९
अथ संत्यजतो धर्ममधर्मं चानुतिष्ठतः ।
प्रतिसंवेष्टते भूमिरग्नौ चर्माहितं यथा ॥ ३०
य एव यत्नः क्रियते परराष्ट्रविमर्दने ।
स एव यत्नः कर्तव्यः स्वराष्ट्रपरिपालने । ३१
धर्मेण राज्यं विन्देत धर्मेण परिपालयेत् ।
धर्ममूलां श्रियं प्राप्य न जहाति न हीयते ॥३२
अप्युन्मत्तात्प्रलपतो बालाच्च परिजल्पतः ।
सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम्॥ ३३
सुव्याहृतानि महतां सुकृतानि ततस्ततः ।
सञ्चिन्वन्धीर आसीत शिलाहारी शिलं यथा ३४

नीत्यर्थः ॥ ६ ॥ अनुबन्धान् प्रयोजनानि ॥ ८ ॥ असांप्रतं अयुक्तं यथा स्यात्तथा न वर्तितव्यम् ॥ १२ ॥ मुखे मिष्टमन्ते मृत्युदं कर्म न कर्तव्यमित्यर्थः । अनुबन्धं पश्चाद्बन्धनम् ॥१३॥ आद्यं भक्षणीयम् ॥ १४ ॥ अङ्गारकारको हि मूलत उत्कृत्य काष्ठं दहति । अङ्गार इङ्गालः ॥ १८ ॥ अनारभ्याः प्रबलैः सह वैरादयः । अगताः कदाचिदप्यप्राप्ताः ॥ २० ॥ लघुमूलान् अल्पोपायान् ॥ २३ ॥ सुपुष्पितः वाचा चक्षुषा चानुग्रहं दर्शयन्नपि अफलः स्यात् । भृत्यं न धनेन वर्धयेत् । सफलोपि सन् दुरारुहः भृत्यवश्यो न भवेत् । अपक्व इति । अन्तर्बलहीनोऽपि बलवत्तां बहिः प्रकाशयेदेवेत्यर्थः ॥ २५ ॥ कर्मणा दानेन । लोकं भृत्यवर्गम् ॥ २६ ॥ आदितः आदिकालात् सद्भिराचरितं धर्ममाचरत इत्यन्वयः ॥ २९ ॥ प्रतिसंवेष्टते संकुचति । बहुफलं न प्रयच्छतीत्यर्थः ॥ ३० ॥ न जहाति श्रियम् ॥ ३२ ॥ सुव्याहृतानि पाण्डित्यवचनानि सुकृतानि तदुपदिष्टकर्माणि । शिलं कणिशाद्यर्जनम् ॥ ३४ ॥

गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥३५
भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा ।
अथ या सुदुघा राजन्नैव तां वितुदन्त्यपि ॥३६
यदतप्तं प्रणमति न तत्सन्तापमर्हति ।
यच्च स्वयं नतं दारु न तत्संनामयेद्बुधः ॥ ३७
एतयोपमया धीरः सन्नमेत बलीयसे ।
इन्द्राय स प्रणमते नमते यो बलीयसे ॥ ३८
पर्जन्यनाथाः पशवो राजानो मन्त्रिबान्धवाः ।
पतयो बान्धवाः स्त्रीणां ब्राह्मणा वेदबान्धवाः ॥
सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते ।
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥ ४०
मानेन रक्ष्यते धान्यमश्वान्रक्षेदनुक्रमात् ।
अभीक्ष्णदर्शनाद्गावः स्त्रियो रक्ष्याः कुचेलतः ॥४१
न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः ।
अन्तेष्वपि हि जातानां वृत्तमेव विशिष्यते ॥४२
य ईर्षुः परवित्तेषु रूपे वीर्ये कुलान्वये ।
सुखसौभाग्यसत्कारे तस्य व्याधिरनन्तकः ॥ ४३
अकार्यकरणाद्भीतः कार्याणां च विवर्जनात् ।
अकाले मन्त्रभेदाच्च येन माद्येन्न तत्पिबेत् ॥ ४४
विद्यामदो धनमदस्तृतीयोऽभिजनो मदः ।
मदा एतेऽवलिप्तानामेत एव सतां दमाः ॥ ४५
असन्तोऽभ्यर्थिताः सद्भिः क्वचित्कार्ये कदाचन ।
मन्यन्ते सन्तमात्मानमसन्तमपि विश्रुतम् ॥ ४६
गतिरात्मवतां सन्तः सन्त एव सतां गतिः ।
असतां च गतिः सन्तो न त्वसन्तः सतां गतिः ४७
जिता सभा वस्त्रवता मिष्टाशा गोमता जिता ।
अध्वा जितो यानवता सर्वं शीलवता जितम् ४८
शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति ।
न तस्य जीवितेनार्थो न धनेन न बन्धुभिः ४९
आढ्यानां मांसपरमं मध्यानां गोरसोत्तरम् ।
तैलोत्तरं दरिद्राणां भोजनं भरतर्षभ ॥ ५०
संपन्नतरमेवान्नं दरिद्रा भुञ्जते सदा ।
क्षुत्स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा ॥ ५१
प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।
जीर्यन्त्यपि हि काष्ठानि दरिद्राणां महीपते ॥५२
अवृत्तिर्भयमन्त्यानां मध्यानां मरणाद्भयम् ।
उत्तमानां तु मर्त्यानामवमानात्परं भयम् ॥ ५३
ऐश्वर्यमदपापिष्ठा मदाः पानमदादयः ।
ऐश्वर्यमदमत्तो हि नो पतिलाऽवबुध्यते ॥ ५४
इन्द्रियैरिन्द्रियार्थेषु वर्तमानैरनिग्रहैः ।
तैरयं ताप्यते लोको नक्षत्राणि ग्रहैरिव ॥ ५५
यो जितः पञ्चवर्गेण सहजेनात्मकर्षिणा ।
आपदस्तस्य वर्धन्ते शुक्लपक्ष इवोडुराट् ॥ ५६
अविजित्य य आत्मानममात्यान्विजिगीषते ।
अमित्रान्वा जितामात्यः सोऽवशः परिहीयते ५७
आत्मानमेव प्रथमं द्वेष्यरूपेण योजयेत् ।
ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ॥ ५८
वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥ ५९

रथः शरीरं पुरुषस्य राज-
न्नात्मा नियन्तेन्द्रियाण्यस्य चाश्वाः ।
तैरप्रमत्तः कुशली सदश्वै-
र्दान्तैः सुखं याति रथीव धीरः ॥ ६०

एतान्यनिगृहीतानि व्यापादयितुमप्यलम् ।
अविधेया इवादान्ताः सरथं सारथिं हयम् ॥ ६१
अनर्थमर्थतः पश्यन्नर्थं चैवाप्यनर्थतः ।
इन्द्रियैरजितैर्बालः सुदुःखं मन्यते सुखम् ॥ ६२
यः परित्यज्य स्वादिन्द्रियवशानुगः ।
श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥ ६३

---

योगेन अभ्यासेन । मृजया उद्वर्तनेन ॥ ४० ॥ अनुक्रमः व्यायामशिक्षादिः । मानं द्रोणादि ॥ ४१ ॥ प्रमाणं धर्मस्य कारणम् ॥ ४२ ॥ अकाले इष्टसिद्धेः प्राक् भीतः स्यात् । येन माद्येत् लोभादिना तन्न पिबेत् नाश्रयेत् ॥ ४४ ॥ अभिजनः सहायः ॥ ४५ ॥ संपन्नं मिष्टम् ॥ ५१ ॥ शीलाभावे सत्सु अवमानो महान् क्लेश इत्याह अवृत्तीति ॥ ५३ ॥ ऐश्वर्यमदः पापिष्ठो निन्दिततमो येभ्यस्ते पानमदादयो मदाः ॥ ५४ ॥ इन्द्रियार्थेषु शब्दादिषु । ग्रहैः सूर्यादिभिः ॥ ५५ ॥ पञ्चवर्गः श्रोत्रादिगणः ॥ ५६ ॥ आत्मानं मनः ॥ ५८ ॥ व्यापादयितुं नाशयितुम् । अविधेयाः अवशाः ॥ ६१ ॥ अर्थतोऽर्थहेतोः ।

अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः ।
इन्द्रियाणामनैश्वर्यादैश्वार्याद्भ्रश्यते हि सः ॥ ६४
आत्मनात्मानमन्विच्छेन्मनोबुद्धीन्द्रियैर्यतैः ।
आत्मा ह्येवात्मनो बन्धुरात्मैव रिपुरात्मनः॥६५
बन्धुरात्मात्मनस्तस्य येनैवात्मात्मना जितः ।
स एव नियतो बन्धुः स एव नियतो रिपुः॥६६
क्षुद्राक्षेणेव जालेन झषावपिहितावुरू ।
कामश्च राजन्क्रोधश्च तौ प्रज्ञानं विलुम्पतः॥६७
समवेक्ष्येह धर्मार्थौ संभारान्योऽधिगच्छति ।
स वै संभृतसंभारः सततं सुखमेधते ॥ ६८
यः पञ्चाभ्यन्तराञ्शत्रूनविजित्य मनोमयान् ।
जिगीषति रिपूनन्यान्रिपवोऽभिभवन्ति तम् ॥६९
दृश्यन्ते हि महात्मानो बध्यमानाः स्वकर्मभिः ।
इन्द्रियाणामनीशत्वाद्राजानो राज्यविभ्रमैः॥७०
　असंत्यागात्पापकृतामपापां-
　　स्तुल्यो दण्डः स्पृशते मिश्रभावात् ।
　शुष्केणार्द्रं दह्यते मिश्रभावा-
　　त्तस्मात्पापैः सह सन्धिं न कुर्यात्॥ ७१
निजानुत्पततः शत्रून्पञ्च पञ्चप्रयोजनान् ।
यो मोहान्न निगृह्णाति तमापद्ग्रसते नरम् ॥७२
अनसूयार्जवं शौचं सन्तोषः प्रियवादिता ।
दमः सत्यमनायासो न भवन्ति दुरात्मनाम् ॥७३
आत्मज्ञानमनायासस्तितिक्षा धर्मनित्यता ।
वाक्चैव गुप्ता दानं च नैतान्यन्त्येषु भारत॥ ७४
आक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान् ।
वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ॥ ७५

हिंसा बलमसाधूनां राज्ञां दण्डविधिर्बलम् ।
शुश्रूषा तु बलं स्त्रीणां क्षमा गुणवतां बलम्॥७६
वाक्संयमो हि नृपते सुदुष्करतमो मतः ।
अर्थवच्च विचित्रं च न शक्यं बहु भाषितुम्॥ ७७
अभ्यावहति कल्याणं विविधं वाक् सुभाषिता ।
सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ॥ ७८
रोहते सायकैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम्७९
कर्णिनालीकनाराचान्निर्हरन्ति शरीरतः ।
वाक्छशल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः॥
　वाक्सायका वदनान्निष्पतन्ति
　　यैराहतः शोचति रात्र्यहानि ।
　परस्य नामर्मसु ते पतन्ति
　　तान्पण्डितो नावसृजेत्परेभ्यः ॥ ८१
यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षन्ति सोऽवाचीनानि पश्यति ८२
बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते ।
अनयो नयसङ्काशो हृदयान्नापसर्पति ॥ ८३
सेयं बुद्धिः परीता ते पुत्राणां भरतर्षभ ।
पाण्डवानां विरोधेन न चैनानवबुध्यसे ॥ ८४
राजा लक्षणसपन्नस्त्रैलोक्यस्य॥५ यो भवेत्
शिष्यस्ते शासिता सोऽस्तु धृतराष्ट्र युधिष्ठिरः॥८५
अतीव सर्वान्पुत्रांस्ते भागधेयपुरस्कृतः ।
तेजसा प्रज्ञया चैव युक्तो धर्मार्थतत्त्ववित्॥ ८६
अनुक्रोशादानृशंस्याद्योऽसौ धर्मभृतां वरः ।
गौरवात्तव राजेन्द्र बहून्क्लेशांस्तितिक्षति ॥ ८७

॥ इति श्रीमन्महाभारते उद्योगपर्वणि प्रजागरपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

अनर्थतः अन्यायतः ॥ ६२ ॥ क्षुद्राक्षेण सूक्ष्मछिद्रेण प्रज्ञानं तौ नाशयतः । जालमिव महामीनावित्यर्थः ॥ ६७ ॥ समवेक्ष्य अनुरुध्य । संभारान् जयसाधनानि ॥ ६८ ॥ राजानो रावणादयः । राज्यविभ्रमैः ऐश्वर्यविलासैः । स्वकर्मभिः सीताहरणादिभिः ॥७०॥ पञ्च इन्द्रियाणि पञ्चप्रयोजनानि शब्दश्रवणादीनि येषां तान् । उत्पततः उत्पथेन गच्छतः ॥ ७२ ॥ अनायासः अचाञ्चल्यम् ॥ ७३ ॥ तितिक्षा द्वन्द्वसहनशीलता । वाक्गुप्ता असंबद्धप्रलापाद्रक्षिता । अन्त्येषु नीचेषु ॥ ७४ ॥ आक्रोशो रूक्षभाषणम् । परिवादो निन्दा ॥ ७५ ॥ वाक्संयमो नियतं वचनम् । विचित्रं चमत्कारयुक्तम् ॥ ७७ ॥ बीभत्सं निन्दितं यतो न संरोहति ॥ ७९ ॥ कर्णी कर्णाकृतिफलको बाणः । नालीकः नलिकया प्रक्षेप्यो बाणः । निर्हरन्ति निःसारयन्ति ॥ ८० ॥ नामर्मसु किंतु मर्मस्वेव ॥ ८१ ॥ अवाचीनानि नीचकर्माणि ॥ ८२ ॥ शिष्यस्ते त्वदाज्ञाकारी । शासिता पृथिव्याः ॥ ८५ ॥ भागधेये राज्यांशे पुरस्कृतः ॥ ८६ ॥ अनुक्रोशात् दयालुत्वात् आनृशंस्यात् अक्रौर्यात् ॥ ८७ ॥ चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

## पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

विदुरेण धृतराष्ट्रंप्रति सुधन्वविरोचनसंवादादिकथनपूर्वकं पाण्डवेषु पुत्रतौल्येन वृत्तिविधानम् ॥ १ ॥

धृतराष्ट्र उवाच ।
ब्रूहि भूयो महाबुद्धे धर्मार्थसहितं वचः ।
शृण्वतो नास्ति मे तृप्तिर्विचित्राणीह भाषसे ॥ १
विदुर उवाच ।
सर्वतीर्थेषु वा स्नानं सर्वभूतेषु चार्जवम् ।
उभे त्वेते समे स्यातामार्जवं वा विशिष्यते ॥ २
आर्जवं प्रतिपद्यस्व पुत्रेषु सततं विभो ।
इह कीर्तिं परां प्राप्य प्रेत्य स्वर्गमवाप्स्यसि ॥ ३
यावत्कीर्तिर्मनुष्यस्य पुण्या लोके प्रगीयते ।
तावत्स पुरुषव्याघ्र स्वर्गलोके महीयते ॥ ४
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
विरोचनस्य संवादं केशिन्यर्थे सुधन्वना ॥ ५
स्वयंवरे स्थिता कन्या केशिनी नाम नामतः ।
रूपेणाप्रतिमा राजन्विशिष्टपतिकाम्यया ॥ ६
विरोचनोऽथ दैतेयस्तदा तत्राजगाम ह ।
प्राप्तुमिच्छंस्ततस्तत्र दैत्येन्द्रं प्राह केशिनी ॥ ७
केशिन्युवाच ।
किं ब्राह्मणाः स्विच्छ्रेयांसो दितिजाः स्विद्विरोचन
अथ केन स्म पर्यङ्कं सुधन्वा नाधिरोहति ॥ ८
विरोचन उवाच ।
प्राजापत्यास्तु वै श्रेष्ठा वयं केशिनि सत्तमाः ।
अस्माकं खल्विमे लोकाः के देवाः के द्विजातयः
केशिन्युवाच ।
इहैवावां प्रतीक्षाव उपस्थाने विरोचन ।
सुधन्वा प्रातरागन्ता पश्येयं वां समागतौ ॥ १०
विरोचन उवाच ।
तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे ।
सुधन्वानं च मां चैव प्रातर्द्रष्टासि सङ्गतौ ॥ ११
विदुर उवाच ।
अतीतायां च शर्वर्यामुदिते सूर्यमण्डले ।
अथाजगाम तं देशं सुधन्वा राजसत्तम ।
विरोचनो यत्र विभो केशिन्या सहितः स्थितः ॥
सुधन्वा च समागच्छत्प्राह्लादिं केशिनीं तथा ।
समागतं द्विजं दृष्ट्वा केशिनी भरतर्षभ ।
प्रत्युत्थायासनं तस्मै पाद्यमर्घ्यं ददौ पुनः ॥ १३
'इति होवाच वचनं विरोचनमनुत्तमम् ।
आस्स्व तल्पे हि सौवर्णे प्राह्लादे ब्राह्मणस्त्वहम् ॥'
अन्वालभे हिरण्मयं प्राह्लादे ते वरासनम् ।
एकत्वमुपसंपन्नो नत्वासेऽहं त्वया सह ॥ १५
विरोचन उवाच ।
तवार्हते तु फलकं कूर्चं वाप्यथवा बृसी ।
सुधन्वन्न त्वमर्होऽसि मया सह समासनम् ॥ १६
सुधन्वोवाच ।
पितापुत्रौ सहासीतां द्वौ विप्रौ क्षत्रियावपि ।
वृद्धौ वैश्यौ च शूद्रौ च न त्वन्यावितरेतरम् १७
पिता हि ते समासीनमुपासीतैव मामधः ।
बालः सुखैधितो गेहे न त्वं किञ्चन बुध्यसे १८
विरोचन उवाच ।
हिरण्यं च गवाश्वं च यद्वित्तमसुरेषु नः ।
सुधन्वन्विपणे तेन प्रश्नं पृच्छाव ये विदुः ॥ १९
सुधन्वोवाच ।
हिरण्यं च गवाश्वं च तवैवास्तु विरोचन ।
प्राणयोस्तु पणं कृत्वा प्रश्नं पृच्छाव ये विदुः २०
विरोचन उवाच ।
आवां कुत्र गमिष्यावः प्राणयोर्विपणे कृते ।
न तु देवेष्वहं स्थाता न मनुष्येषु कर्हिचित् ॥ २१

आर्जवं अवैषम्यम् ॥ २ ॥ इहस्थाने उपस्थाने मामुपस्थातुम् । वां दैत्यब्राह्मणौ अहं पश्येयम् ॥ १० ॥ समागच्छत् उभयोः संमुखं अगच्छत् ॥ १३ ॥ विरोचनेन सौवर्णे पीठे मया सह उपवेश्यतामिति प्रार्थितः सुधन्वा उवाच ॥ १४ ॥ अन्वालभे स्पृशाम्येव ॥ १५ ॥ फलकं काष्ठपीठं । कूर्चं । बृसी वर्तितदर्भमयं पीठं वा । तव अर्हते योग्यं भवति ॥ १६ ॥ उपासीत सेवते । अधः स्थित्वेति शेषः ॥ १८ ॥ प्रश्नं आवयोः कः श्रेष्ठ इति प्रश्नम् । ये विदुस्तान् पृच्छाव ॥ १९ ॥

सुधन्वोवाच ।
पितरं ते गमिष्यावः प्राणयोर्विपणे कृते ।
पुत्रस्यापि स हेतोर्हि प्रह्लादो नानृतं वदेत्॥ २२
विदुर उवाच ।
एवं कृतपणौ क्रुद्धौ तत्राभिजग्मतुस्तदा ।
विरोचनसुधन्वानौ प्रह्लादो यत्र तिष्ठति ॥ २३
प्रह्लाद उवाच ।
इमौ तौ संप्रदृश्येते याभ्यां न चरितं सह ।
आशीविषाविव क्रुद्धावेकमार्गाविहागतौ ॥ २४
किं वै सहैवं चरथो न पुरा चरथः सह ।
विरोचनैतत्पृच्छामि किं ते सख्यं सुधन्वना॥२५
विरोचन उवाच ।
न मे सुधन्वना सख्यं प्राणयोर्विपणावहे ।
प्रह्लाद तत्त्वं पृच्छामि मा प्रश्नमनृतं वदेः॥ २६
प्रह्लाद उवाच ।
उदकं मधुपर्कं चाप्यानयन्तु सुधन्वने ।
ब्रह्मन्नभ्यर्चनीयोऽसि श्वेता गौः पीवरी कृता॥२७
सुधन्वोवाच ।
उदकं मधुपर्कं च प्रश्नवाचार्पितं मम ।
प्रह्लाद त्वं तु मे तथ्यं प्रश्नं प्रब्रूहि पृच्छतः ।
किं ब्राह्मणाः स्विच्छ्रेयांस उताहो स्विद्विरोचनः
प्रह्लाद उवाच ।
'न कल्माषो न कपिलो न कृष्णो न च लोहितः।
अणीयान्क्षुरधारायाः को धर्मं वक्तुमर्हति॥ २९
अभिवाद्यो भवान्ब्रह्मन्साक्ष्ये चैव नियोजितः॥'
पुत्र एको मम ब्रह्मंस्त्वं च साक्षादिहास्थितः ।
तयोर्विवदतोः प्रश्नं कथमस्मद्विधो वदेत् ॥ ३०
सुधन्वोवाच ।
'यदेतत्त्वं न वक्ष्यसि यदि वापि विवक्ष्यसि ।
प्रह्लाद प्रश्नमतुलं मूर्धा ते विफलिष्यति ॥ ३१
विदुर उवाच ।
आदित्येन सहायान्तं प्रह्लादो हंसमब्रवीत् ।
धृतराष्ट्र महाप्राज्ञ सर्वज्ञं सर्वदर्शिनम् ॥ ३२
प्रह्लाद उवाच ।
पुत्रो वाऽन्यो भवेद्ब्रह्मन्साक्ष्ये चापि भवेत्स्थितः।
तयोर्विवदतोर्हंस कथं धर्मः प्रवर्तते ॥ ३३
हंस उवाच ।'
गां प्रदद्यादौरसाय यद्वान्यत्स्यात्प्रियं धनम् ।
द्वयोर्विवदतो राजन्प्रश्नं सत्यं यथा वदेत् ॥ ३४
प्रह्लाद उवाच ।
अथ यो नैव प्रब्रूयात्सत्यं वा यदि वाऽनृतम् ।
हंस तत्वं च पृच्छामि कियदेनः करोति सः॥३५
'हंस उवाच ।
पृष्टो धर्मं न विब्रूयाद्गोकर्णशिथिलं चरन् ।
धर्माद्भ्रश्यति राजंस्तु नास्य लोकोऽस्ति न प्रजाः॥
धर्म एतान्संरुजति यथा नद्यस्तु कूलजान् ।
ये धर्ममनुपश्यन्तस्तूष्णीं ध्यायन्त आसते॥ ३७
श्रेष्ठोऽर्धं तु हरेत्तत्र भवेत्पादश्च कर्तरि ।
पादस्तेषु सभासत्सु यत्र निन्द्यो न निन्द्यते॥३८
अनेना भवति श्रेष्ठो मुच्यन्तेऽपि सभासदः ।
कर्तारमेनो गच्छेद्वा निन्द्यो यत्र हि निन्द्यते॥ ३९
प्रह्लाद उवाच ।
मोहाद्वा चैव कामाद्वा मिथ्यावादं यदि ब्रुवन् ।
धृतराष्ट्र तत्वं पृच्छामि दुर्विवक्ता तु किं वसेत्॥४०
हंस उवाच ।'
यां रात्रिमधिविन्ना स्त्री यां चैवाक्षपराजितः ।
यां च भाराभितप्ताङ्गो दुर्विवक्ता तु तां वसेत् ४१
नगरे प्रतिरुद्धः सन्बहिर्द्वारे बुभुक्षितः ।
अमित्रान्भूयसः पश्यन्दुर्विवक्ता तु तां वसेत्॥४२
यां च रात्रिमभिद्रुग्धो यां च मित्रे प्रियेऽनृते ।
सर्वस्वेन च हीनो यो दुर्विवक्ता तु तां वसेत्॥४३
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ ४४

सह न चरितं वैरात् ॥ २४ ॥ पीवरी पुष्टा । कृता मधुपर्कार्थं उपकल्पिता ॥ २७ ॥ नियोजितः अहमिति शेषः ॥ ३० ॥ पगच्छेदिति ङ.पाठः ॥ ३९ ॥ किं वसेत् कथं वसेत् ॥ ४० ॥ अधिविन्ना कृतसपत्नीका स्त्री तां रात्रिं वसेत्तद्वद्दुःखं प्राप्नुयात् ॥ ४१ ॥ पञ्च पूर्वजान् पश्वनृते अजादिपशुहिंसार्थमनृते उक्ते सति हन्ति नाशयति परलोकात् च्यावयति ।

हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदेः॥४५
प्रह्लाद उवाच ।
मत्तः श्रेयानङ्गिरा वै सुधन्वा त्वद्विरोचन ।
मातास्य श्रेयसी मातुस्तस्मात्त्वं तेन वै जितः ४६
विरोचन सुधन्वाऽयं प्राणानामीश्वरस्तव ।
सुधन्वन्पुनरिच्छामि त्वया दत्तं विरोचनम्॥४७
सुधन्वोवाच ।
यद्धर्ममवृणीथास्त्वं न कामादनृतं वदीः ।
पुनर्ददामि ते पुत्रं तस्मात्प्रह्लाद दुर्लभम् ॥ ४८
एष प्रह्लाद पुत्रस्ते मया दत्तो विरोचनः ।
पादप्रक्षालनं कुर्यात्कुमार्याः सन्निधौ मम॥ ४९
विदुर उवाच ।
तस्माद्राजेन्द्र भूम्यर्थे नानृतं वक्तुमर्हसि ।
मा गमः ससुतामात्यो नाशं पुत्रार्थमब्रुवन्॥५०
न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
यं तु रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् ५१
यथायथा हि पुरुषः कल्याणे कुरुते मनः ।
तथातथाऽस्य सर्वार्थाः सिद्ध्यन्ते नात्र संशयः॥
नैनं छन्दांसि वृजिनात्तारयन्ति
मायाविनं मायया वर्तमानम् ।
नीडं शकुन्ता इव जातपक्षा-
श्छन्दांस्येनं प्रजहत्यन्तकाले ॥ ५३
मद्यपानं कलहं पूगवैरं
भार्यापत्योरन्तरं ज्ञातिभेदम् ।
राजद्विष्टं स्त्रीपुंसयोर्विवादं
वर्ज्यान्याहुर्यश्च पन्थाः प्रदुष्टः ॥ ५४
सामुद्रिकं वणिजं चोरपूर्वं
शलाकधूर्तं च चिकित्सकं च ।
अरिं च मित्रं च कुशीलवं च
नैतान्साक्ष्ये त्वधिकुर्वीत सप्त ॥ ५५
मानाग्निहोत्रमुत मानमौनं
मानेनाधीतमुत मानयज्ञः ।
एतानि चत्वार्यभयङ्कराणि
भयं प्रयच्छन्त्ययथाकृतानि ॥ ५६
अगारदाही गरदः कुण्डाशी सोमविक्रयी ।
पर्वकारश्च सूची च मित्रध्रुक्पारदारिकः ॥ ५७
भ्रूणहा गुरुतल्पी च यश्च स्यात्पानपो द्विजः ।
अतितीक्ष्णश्च काकश्च नास्तिको वेदनिन्दकः ५८
स्रुवप्रग्रहणो व्रात्यः कीनाशश्चात्मवानपि ।
रक्षेत्युक्तश्च यो हिंस्यात्सर्वे ब्रह्महभिः समाः॥ ५९
तृणोल्कया ज्ञायते जातरूपं
वृत्तेन भद्रो व्यवहारेण साधुः ।
शूरो भयेष्वर्थकृच्छ्रेषु धीरः
कृच्छ्रेष्वापत्सु सुहृदश्चारयश्च ॥ ६०
जरा रूपं हरति हि धैर्यमाशा
मृत्युः प्राणान्धर्मचर्यामसूया ।
क्रोधः श्रियं शीलमनार्यसेवा
ह्रियं कामः सर्वमेवाभिमानः ॥ ६१

---

एवमुत्तरत्र ॥ ४४ ॥ अङ्गिराः सुधन्वनः पिता । त्वत् त्वत्तः ॥ ४६ ॥ पादप्रक्षालनं हरिद्रया पादधावनम् । कुमार्याः केशिन्याः । विवाहे दंपत्योः परस्परं हरिद्रया पादधावनं कुर्वन्तीति प्रसिद्धम् । अस्यैव भार्या केशिनी भवत्वित्यर्थः ॥ ४९ ॥ अब्रुवन्सत्यमिति शेषः ॥ ५० ॥ छन्दांसि वेदाः ॥ ५३ ॥ अन्तरं वियोगम् । विवादं वैरप्रवर्तनम् ॥ ५४ ॥ सामुद्रिकं हस्तरेखादिपरीक्षकम् । वणिजं चोरपूर्वं पूर्वं चोरः पश्चाद्वणिग्भूतः तं कूटतुलावन्तं वा । शलाकधूर्तं शलाकया पाशादिना वा शकुनादिकमुक्त्वा योऽन्यान् वञ्चयति तम् । अरिं विपरीतसाक्ष्यभयात् । मित्रं परीक्षकाणामविश्वासात् । कुशीलवं कुत्सितं शीलं वाति अनुसरतीति तम् । नर्तकीदासं विटोन्मत्तादिकं वा ॥ ५५ ॥ सत्कर्मद्वारापि तस्य साधुत्वं न मन्तव्यमित्याह मानेति । मानः लोकेषु उत्कर्षः तदर्थान्यग्निहोत्रादीनि भयदानीत्यर्थः । मौनं ध्यानम् ॥५६॥ कुण्डाशी भगभक्षः । जीवति भर्तरि जाराज्जातः कुण्डस्तदन्नाशी । सोमविक्रयी प्रसिद्धः । पर्वकारः शरकृत् आयुधमात्रकर्तेत्यर्थः । सूची सूचको नक्षत्रादीनां परदोषाणां च । ज्यौतिषिकः पिशुनो वा ॥ ५७ ॥ कारुः अशुचिः । नास्तिकः परलोकादिद्वेषी ॥५८॥ स्रुवप्रग्रहणो ग्रामपुरोहितः । व्रात्यः अतीतोपनयनकालः पतितसावित्रीको वा । कीनाशः कर्षकः । आत्मवान्समर्थोऽपि यो रक्षेत्युक्तो हिंस्यात् ॥५९॥ तृणोल्कया तृणज्वालया जातरूपं रूपवद्वस्तु ज्ञायतेऽन्धकारे सति । भद्रो वृषः धर्म इतियावत् । वृत्तेन शीलेन सोऽस्ति नास्तीति ज्ञायते । व्यवहारेण अहिंसादिप्रधानेन । कृच्छ्रेषु दुर्भिक्षादिसंकटेषु ॥ ६० ॥

न क्रोधिनोऽर्थो न नृशंसस्य मित्रं
क्रूरस्य न स्त्री सुखिनो न विद्या ।
न कामिनो ह्रीरलसस्य न श्रीः
सर्वं तु न स्यादनवस्थितस्य ॥ ६२
श्रीर्मङ्गलात्प्रभवति प्रागल्भ्यात्संप्रवर्धते ।
दाक्ष्यात्तु कुरुते मूलं संयमात्प्रतितिष्ठति ॥ ६३
अष्टौ गुणाः पुरुषं दीपयन्ति
प्रज्ञा च कौल्यं च दमः श्रुतं च ।
पराक्रमश्चाबहुभाषिता च
दानं यथाशक्ति कृतज्ञता च ॥ ६४
एतान्गुणांस्तात महानुभावा-
नेको गुणः संश्रयते प्रसह्य ।
राजा यदा सत्कुरुते मनुष्यं
सर्वान्गुणानेष गुणोतिभाति ॥ ६५
अष्टौ नृपेमानि मनुष्यलोके
स्वर्गस्य लोकस्य निदर्शनानि ।
चत्वार्येषामन्ववेतानि सद्भि-
श्चत्वारि चैषामनुयान्ति सन्तः ॥ ६६
यज्ञो दानमध्ययनं तपश्च
चत्वार्येतान्यन्ववेतानि सद्भिः ।
दमः सत्यमार्जवमानृशंस्यं
चत्वार्येतान्यनुयान्ति सन्तः ॥ ६७
इज्याध्ययनदानानि तपः सत्यं क्षमा घृणा ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥६८
तत्र पूर्वचतुर्वर्गो दम्भार्थमपि सेव्यते ।
उत्तरश्च चतुर्वर्गो नामहात्मसु तिष्ठति ॥ ६९
न सा सभा यत्र न सन्ति वृद्धा
न ते वृद्धा ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति
न तत्सत्यं यच्छलेनानुविद्धम् ॥ ७०
सत्यं रूपं श्रुतं विद्या कौल्यं शीलं बलं धनम् ।
शौर्यं च चित्रभाष्यं च दशेमे स्वर्गयोनयः ॥७१
पापं कुर्वन्पापकीर्तिः पापमेवाश्नुते फलम् ।
पुण्यं कुर्वन्पुण्यकीर्तिः पुण्यमत्यन्तमश्नुते ॥ ७२
तस्मात्पापं न कुर्वीत पुरुषः शंसितव्रतः ।
पापं प्रज्ञां नाशयति क्रियमाणं पुनःपुनः ॥ ७३
नष्टप्रज्ञः पापमेव नित्यमारभते नरः ।
पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनःपुनः ॥ ७४
वृद्धप्रज्ञः पुण्यमेव नित्यमारभते नरः ।
पुण्यं कुर्वन्पुण्यकीर्तिः पुण्यं स्थानं स गच्छति ।
तस्मात्पुण्यं निषेवेत पुरुषः सुसमाहितः ॥ ७५
असूयको दन्दशूको निष्ठुरो वैरकृच्छठः ।
स कृच्छ्रं महदाप्नोति नचिरात्पापमाचरन् ॥७६
अनसूयुः कृतप्रज्ञः शोभनान्याचरन्सदा ।
नकृच्छ्रं महदाप्नोति सर्वत्र च विरोचते ॥ ७७
प्रज्ञामेवागमयति यः प्राज्ञेभ्यः स पण्डितः ।
प्राज्ञो ह्यवाप्य धर्मार्थौ शक्नोति सुखमेधितुम् ॥७८
दिवसेनैव तत्कुर्याद्येन रात्रौ सुखं वसेत् ।
अष्टमासेन तत्कुर्याद्येन वर्षाः सुखं वसेत् ॥ ७९
पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत् ।
यावज्जीवं तु तत्कुर्याद्येन प्रेत्य सुखं वसेत् ॥८०
जीर्णमन्नं प्रशंसन्ति भार्यां च गतयौवनाम् ।
शूरं विजितसङ्ग्रामं गतपारं तपस्विनम् ॥ ८१
धनेनाधर्मलब्धेन यच्छिद्रमपिधीयते ।
असंवृतं तद्भवति ततोऽन्यदवदीर्यते ॥ ८२
गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् ।
अन्तः प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥८३

श्रीरिति । दाक्ष्यं शीघ्रकारित्वम् ॥ ६३ ॥ एष गुणो राजसत्कारः ॥ ६५ ॥ इमानि वक्ष्यमाणानि । अन्ववेतानि नित्यसंबद्धानि । अनुयान्ति यत्नेन भजन्ति ॥ ६६ ॥ रूपं विनयमुद्रा श्रुतं अध्ययनम् । विद्या देवताद्युपासनम् । चित्रभाष्यं युक्तियुक्तं वचनम् ॥ ७१ ॥ दन्दशूको मर्मच्छेत्ता । निष्ठुरः अप्रियवाक् । नचिरात् शीघ्रम् ॥ ७६ ॥ नकृच्छ्रं सुखम् ॥ ७७ ॥ आगमयति आनयति ॥ ७८ ॥ वर्षा इत्यत्यन्तसंयोगे द्वितीया ॥ ७९ ॥ गतपारं आप्ततत्त्वम् ॥ ८१ ॥ परिपाकसुखं कर्म त्वत्पुत्रा न कुर्वन्ति अन्यायेन च सुखं लिप्सन्ति तत्तु विपरीतमेवेत्याह धनेनेति ॥ ८२ ॥ आत्मवतां जितचित्तानाम् । प्रच्छन्नपापो दुर्योधनः ॥ ८३ ॥ पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

ऋषीणां च नदीनां च कुलानां च महात्मनाम्।
प्रभवो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च॥८४
द्विजातिपूजाभिरतो दाता ज्ञातिषु चार्जवी।
क्षत्रियः शीलभाग्राजंश्चिरं पालयते महीम्॥८५
सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥८६
बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत।
तानि जङ्घाजघन्यानि भारप्रत्यवराणि च॥८७
दुर्योधनेऽथ शकुनौ मूढे दुःशासने तथा
कर्णे चैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि॥८८
सर्वैर्गुणैरुपेतास्तु पाण्डवा भरतर्षभ।
पितृवत्त्वयि वर्तन्ते तेषु वर्तस्व पुत्रवत्॥ ८९

॥ इति श्रीमन्महाभारते उद्योगपर्वणि प्रजागरपर्वणि पञ्चत्रिंशोऽध्यायः॥ ३५॥

## षट्त्रिंशोऽध्यायः॥ ३६॥

विदुरेण धृतराष्ट्रंप्रति आत्रेयेण साध्यान्प्रत्युपदिष्टनीतिकथनम्॥ १॥ तथा महाकुललक्षणाद्यभिधानपूर्वकं पाण्डवैः सह सन्धिकरणविधानम्॥ २॥

विदुर उवाच।
अत्रैवोदाहरन्तीममितिहासं पुरातनम्।
आत्रेयस्य च संवादं साध्यानां चेति नः श्रुतम्१
चरन्तं हंसरूपेण महर्षिं संशितव्रतम्।
साध्या देवा महाप्राज्ञं पर्यपृच्छन्त वै पुरा॥ २
साध्या ऊचुः।
साध्या देवा वयमेते महर्षे
दृष्ट्वा भवन्तं न शक्नुमोऽनुमातुम्।
श्रुतेन धीरो बुद्धिमांस्त्वं मतो नः
काव्यां वाचं वक्तुमर्हस्युदाराम्॥ ३
हंस उवाच।
एतत्कार्यममराः संश्रुतं मे
धृतिः शमः सत्यधर्मानुवृत्तिः।
ग्रन्थिं विनीय हृदयस्य सर्वं
प्रियाप्रिये चात्मसमं नयीत॥ ४
आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति॥ ५
नाक्रोशी स्यान्नावमानी परस्य
मित्रद्रोही नोत नीचोपसेवी।
न चाभिमानी न च हीनवृत्तो
रूक्षां वाचं रुशतीं वर्जयीत॥ ६
मर्माण्यस्थीनि हृदयं तथासू-
न्रूक्षा वाचो निर्दहन्तीह पुंसाम्।
तस्माद्वाचमुशतीं रूक्षरूपां
धर्मारामो नित्यशो वर्जयीत॥ ७
अरुन्तुदं परुषं रूक्षवाचं
वाक्कण्टकैर्वितुदन्तं मनुष्यान्।
विद्यादलक्ष्मीकतमं जनानां
मुखे निबद्धां निर्ऋतिं वै वहन्तम्॥ ८
परश्चेदेनमभिविध्येत बाणै-
र्भृशं सुतीक्ष्णैरनलार्कदीप्तैः।
विरिच्यमानोऽप्यतिरिच्यमानो
विद्यात्कविः सुकृतं मे दधाति॥ ९
यदि सन्तं सेवति यद्यसन्तं
तपस्विनं यदि वा स्तेनमेव।
वासो यथा रङ्गवशं प्रयाति
तथा स तेषां वशमभ्युपैति॥ १०
अतिवादं न प्रवदेन्न वादये-
द्यो नाहतः प्रतिहन्यान्न घातयेत्।

हंसरूपेण परिव्राजकरूपेण॥ २॥ अनुमातुं लिङ्गेन ज्ञातुम्। काव्यां विद्वल्लक्षणाभिधायिनीम्॥ ३॥ मे मया संश्रुतम्। गुरुभ्य इति शेषः। तदेवाह धृतिरिति॥ ४॥ नाक्रोशेत् न शपेत्। यतस्तितिक्षतो मन्युः क्रोध एव आक्रोष्टारं दहति॥ ५॥ निर्ऋतिं अलक्ष्मीं मृत्युं वा॥ ८॥ बाणैः वाग्बाणैः विरिच्यमानः तनूक्रियमाणः। दधाति पुष्णाति॥ ९॥ रङ्गस्य नीलादेर्वशं नीलतादिकम्॥ १०॥ अतिप्रोक्तोपि न वदेत् वादयेद्वा। अनाहतो नैव प्रतिहन्यात्। आहतोपि पापकं

हन्तुं च यो नेच्छति पापकं वै
तस्मै देवाः स्पृहयन्त्यागताय ॥ ११
अव्याहृतं व्याहृताच्छ्रेय आहुः
सत्यं वदेद्व्याहृतं तद्द्वितीयम् ।
प्रियं वदेद्व्याहृतं तत्तृतीयं
धर्म्यं वदेद्व्याहृतं तच्चतुर्थम् ॥ १२
यादृशैः सन्निविशते यादृशांश्चोपसेवते ।
यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः ॥ १३
यतो यतो निवर्तते ततस्ततो विमुच्यते ।
निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि ॥ १४
न जीयते चानुजिगीषतेऽन्या-
न्न वैरकृच्चाप्रतिघातकश्च ।
निन्दाप्रशंसासु समस्वभावो
न शोचते हृष्यति नैव चायम् ॥ १५
भावमिच्छति सर्वस्य नाभावे कुरुते मनः ।
सत्यवादी मृदुर्दान्तो यः स उत्तमपूरुषः ॥ १६
नानर्थकं सान्त्वयति प्रतिज्ञाय ददाति च ।
रन्ध्रं परस्य जानाति यः स मध्यमपूरुषः ॥ १७
दुःशासनस्तूपहतोऽभिशस्तो
नावर्तते मन्युवशात्कृतघ्नः ।
न कस्यचिन्मित्रमथो दुरात्मा
कलाश्चैता अधमस्येह पुंसः ॥ १८
न श्रद्दधाति कल्याणं परेभ्योऽप्यात्मशङ्कितः ।
निराकरोति मित्राणि यो वै सोऽधमपूरुषः ॥ १९
उत्तमानेव सेवेत प्राप्तकाले तु मध्यमान् ।
अधमांस्तु न सेवेत य इच्छेद्भूतिमात्मनः ॥ २०
प्राप्नोति वै वित्तमसद्बलेन
नित्योत्थानात्प्रज्ञया पौरुषेण ।
न त्वेव सम्यग्लभते प्रशंसां
न वृत्तमाप्नोति महाकुलानाम् ॥ २१

धृतराष्ट्र उवाच ।

महाकुलेभ्यः स्पृहयन्ति देवा
धर्मार्थनित्याश्च बहुश्रुताश्च ।
पृच्छामि त्वां विदुर प्रश्नमेतं
भवन्ति वै कानि महाकुलानि ॥ २२

विदुर उवाच ।

तपो दमो ब्रह्मवित्त्वं तितिक्षा
इज्या विवाहाः सान्त्वनं चान्नदानम् ।
अष्टावेते नित्यमेवं भवन्ति
सतां गुणास्तानि महाकुलानि ॥ २३
येषां न वृत्तं व्यथते न योनि-
श्चित्तप्रसादेन चरन्ति धर्मम् ।
ये कीर्तिमिच्छन्ति कुले विशिष्टां
त्यक्तानृतास्तानि महाकुलानि ॥ २४
अनिज्यया कुविवाहैर्वेदस्योत्सादनेन च ।
कुलान्यकुलतां यान्ति धर्मस्यातिक्रमेण च ॥ २५
देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ २६
ब्राह्मणानां परिभवात्परिवादाच्च भारत ।
कुलान्यकुलतां यान्ति न्यासापहरणेन च ॥ २७
कुलानि समुपेतानि गोभिः पुरुषतोऽर्थतः ।
कुलसंख्यां न गच्छन्ति यानि हीनानि वृत्ततः ॥ २८
वृत्ततस्त्वविहीनानि कुलान्यल्पधनान्यपि ।
कुलसङ्ख्यां च गच्छन्ति कर्षन्ति च महद्यशः ॥ २९
वृत्तं यत्नेन संरक्षेद्वित्तमेति च याति च ।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥ ३०

---

हन्तारं यदि हन्तुं नेच्छेत् स देवानामपि प्रेष्ठो भवतीत्यर्थः ॥११॥ अव्याहृतं मौनम् । ततोपि श्रेयः सत्यवचनम् । सत्यमपि प्रियं चेत् ततोऽपि श्रेयः । तदपि धर्मादनपेतं चेत् श्रेष्ठतममित्यर्थः ॥ १२ ॥ अस्यामवस्थायां पुरुषस्य न किंचिद्दुःखादिकमस्तीत्याह न जीयते चेति ॥१५॥ भावं कल्याणम् । अभावे अकल्याणे ॥१६॥ अनर्थकं मिथ्या न सांत्वयति ॥ १७ ॥ दुःशासनः दुष्टं शासनं यस्य । एताः कलाः चित्तस्य वृत्तयः अधमस्यैव ॥१८॥ परेभ्यः गुरुभ्यः । आत्मन्येव शङ्कितः विश्वासहीनः ॥ १९ ॥ तपः कृच्छ्रचान्द्रायणादि । दम इन्द्रियजयः । तानि महाकुलानि विद्धि ॥२३॥ न व्यथते न चलति । योनिः पित्रादयोपि ॥२४॥ गोभिर्वाग्भिर्विद्ययेत्यर्थः । पुरुषतः सत्पुरुषैः अर्थतः धनैश्च कुलानि कुलसंख्यां कुलेषु गणनां समुपेतानि भवन्ति ॥ २८ ॥ वृत्ततः धर्मेण । कर्षन्ति आहरन्ति ॥ २९ ॥

गोभिः पशुभिरश्वैश्च कृष्या च सुसमृद्धया ।
कुलानि न प्ररोहन्ति यानि हीनानि वृत्ततः॥३१

मा नः कुले वैरकृत्कश्चिदस्तु
राजा बद्धो मा परस्वापहारी ।
मित्रद्रोही नैकृतिकोऽनृती वा
पूर्वाशी वा पितृदेवातिथिभ्यः ॥ ३२

यश्च नो ब्राह्मणान्हन्याद्यश्च नो ब्राह्मणान् द्विषेत् ।
न नः स समितिं गच्छेद्यश्च नो निर्वपेत्कृषिम्३३

तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥ ३४

श्रद्धया परया राजन्नुपनीतानि सत्कृतिम् ।
प्रवृत्तानि महाप्राज्ञ धर्मिणां पुण्यकर्मिणाम्॥३५

सूक्ष्मोऽपि भारं नृपते स्यन्दनो वै
शक्तो वोढुं न तथाऽन्ये महीजाः ।
एवं युक्ता भारसहा भवन्ति
महाकुलीना न तथान्ये मनुष्याः ॥ ३६

न तन्मित्रं यस्य कोपाद्बिभेति
यद्वा मित्रं शङ्कितेनोपचर्यम् ।
यस्मिन्मित्रे पितरीवाश्वसीत
तद्वै मित्रं सङ्गतानीतराणि ॥ ३७

यः कश्चिदप्यसंबद्धो मित्रभावेन वर्तते ।
स एव बन्धुस्तन्मित्रं सा गतिस्तत्परायणम्॥ ३८

चलचित्तस्य वै पुंसो वृद्धाननुपसेवतः
पारिप्लवमतेर्नित्यमध्रुवो मित्रसङ्ग्रहः ॥ ३९

चलचित्तमनात्मानमिन्द्रियाणां वशानुगम् ।
अर्थाः समभिवर्तन्ते हंसाः शुष्कं सरो यथा॥४०

अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः ।
शीलमेतदसाधूनामभ्रं पारिप्लवं यथा ॥ ४१

सत्कृताश्च कृतार्थाश्च मित्राणां न भवन्ति ये ।
तान्मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते॥४२

अर्थयेदेव मित्राणि सति वाऽसति वा धने ।
नानर्थयन्प्रजानाति मित्राणां सारफल्गुताम्॥४३

सन्तापाद्भ्रश्यते रूपं सन्तापाद्भ्रश्यते बलम् ।
सन्तापाद्भ्रश्यते ज्ञानं सन्तापाद्व्याधिमृच्छति॥४४

अनवाप्यं च शोकेन शरीरं चोपतप्यते ।
अमित्राश्च प्रहृष्यन्ति मा स्म शोके मनः कृथाः४५

पुनर्नरो म्रियते जायते च
पुनर्नरो हीयते वर्धते च ।
पुनर्नरो याचति याच्यते च
पुनर्नरः शोचति शोच्यते च । ४६

सुखं च दुःखं च भवाभवौ च
लाभालाभौ मरणं जीवितं च ।
पर्यायशः सर्वमेते स्पृशन्ति
तस्माद्धीरो न च हृष्येन्न शोचेत् ॥ ४७

चलानि हीमानि षडिन्द्रियाणि
तेषां यद्यद्वर्धते यत्रयत्र ।
ततस्ततः स्रवते बुद्धिरस्य
च्छिद्रोदकुम्भादिव नित्यमम्भः ॥ ४८

धृतराष्ट्र उवाच ।

तनुरुद्धः शिखी राजा मिथ्योपचरितो मया ।
मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति॥४९

नित्योद्विग्नमिदं सर्वं नित्योद्विग्नमिदं मनः ।
यत्तत्पदमनुद्विग्नं तन्मे वद महामते ॥ ५०

विदुर उवाच ।

नान्यत्र विद्यातपसो नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र लोभसन्त्यागाच्छान्तिं पश्यामि तेऽनघ ॥

बुद्ध्या भयं प्रणुदति तपसा विन्दते महत् ।
गुरुशुश्रूषया ज्ञानं शान्तिं योगेन विन्दति॥५२

---

गोभिर्विद्याभिः ॥ ३१ ॥ नैकृतिकः कपटी। वैरकृदादयः कुलघ्ना इत्यर्थः॥ ३२ ॥ निर्वपेत् कुर्यात्॥ ३३ ॥ सत्कृतिं सत्कारं कर्तुं प्रवृत्तानि तृणादीनि॥ ३५ ॥ स्यन्दनः रथयोग्यो वृक्षः । युक्ताः स्यन्दनवदविकलाः ॥ ३६ ॥ सङ्गतानि संबन्धमात्राणि ॥३७॥ बन्धुः संबन्धी । मित्रं उपकारकृत् ॥ ३८ ॥ पारिप्लवमतेः भ्रान्तस्य ॥ ३९ ॥ अभ्रं मेघः ॥ ४१ ॥ मित्राणां हितायेति शेषः ॥ ४२ ॥ अनर्थयन्प्रार्थनाशून्यः ॥ ४३ ॥ अनवाप्यं न प्राप्यम् । शोकेन शोकमात्रेण । इष्टमिति शेषः ॥ ४५ ॥ सर्वं पुरुषम् ॥४७॥ तनुः शरीरमभिव्यक्तिस्थानं काष्ठं तत्र रुद्धोऽनभिव्यक्तः शिखी अग्निस्तथायं राजा धर्मेण रुद्धः। तनुना सूक्ष्मेण धर्मेण वा रुद्धः ॥ ४९ ॥ विन्दते महत्सद्गुरुशास्त्रादिकं लभते । ततो गुरुशुश्रूषया ज्ञानं ग्रन्थजम् । योगेन सर्वचित्तवृत्तिनिरोधेन

अनाश्रिता दानपुण्यं वेदपुण्यमनाश्रिताः ।
रागद्वेषविनिर्मुक्ता विचरन्तीह मोक्षिणः ॥ ५३
स्वधीतस्य सुयुद्धस्य सुकृतस्य च कर्मणः ।
तपसश्च सुतप्तस्य तस्यान्ते सुखमेधते ॥ ५४
स्वास्तीर्णानि शयनानि प्रपन्ना
न वै भिन्ना जातु निद्रां लभन्ते ।
न स्त्रीषु राजन्रतिमाप्नुवन्ति
न मागधैः स्तूयमाना न सूतैः ॥ ५५
न वै भिन्ना जातु चरन्ति धर्मं
न वै सुखं प्राप्नुवन्तीह भिन्नाः ।
न वै भिन्ना गौरवं प्राप्नुवन्ति
न वै भिन्नाः प्रशमं रोचयन्ति ॥ ५६
न वै तेषां स्वदते पथ्यमुक्तं
योगक्षेमं कल्पते नैव तेषाम् ।
भिन्नानां वै मनुजेन्द्र परायणं
न विद्यते किंचिदन्यद्विनाशात् ॥ ५७
संपन्नं गोषु संभाव्यं संभाव्यं ब्राह्मणे तपः ।
संभाव्यं चापलं स्त्रीषु संभाव्यं ज्ञातितो भयं ॥५८
तन्तवोऽप्यायता नित्यं तनवो बहुलाः समाः ।
बहून्बहुत्वादायासान्सहन्तीत्युपमा सताम् ॥५९
धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च ।
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ ६०
ब्राह्मणेषु च ये शूराः स्त्रीषु ज्ञातिषु गोषु च ।
वृन्तादिव फलं पक्वं धृतराष्ट्र पतन्ति ते ॥ ६१
महानप्येकजो वृक्षो बलवान्सुप्रतिष्ठितः ।
प्रसह्य एव वातेन सस्कन्धो मर्दितुं क्षणात् ॥६२
अथ ये सहिता वृक्षाः सङ्घशः सुप्रतिष्ठिताः ।
ते हि शीघ्रतमान्वातान्सहन्तेन्योन्यसंश्रयात् ॥६३
एवं मनुष्यमप्येकं गुणैरपि समन्वितम्
शक्यं द्विषन्तो मन्यन्ते वायुर्द्रुममिवैकजम् ॥ ६४
अन्योन्यसमुपष्टम्भादन्योन्यापाश्रयेण च ।
ज्ञातयः संप्रवर्धन्ते सरसीवोत्पलान्युत ॥ ६५
अवध्या ब्राह्मणा गावो ज्ञातयः शिशवः स्त्रियः ।
येषां चान्नानि भुञ्जीत ये च स्युः शरणागताः ।
महत्यप्यपराधेऽपि तेषां दण्डो विसर्जनम् ॥ ६६
न मनुष्ये गुणः कश्चिद्राजन्सधनतामृते ।
अनातुरत्वाद्भद्रं ते मृतकल्पा हि रोगिणः ॥ ६७
अव्याधिजं कटुकं शीर्षरोगि
पापानुबन्धं परुषं तीक्ष्णमुष्णम् ।
सतां पेयं यन्न पिबन्त्यसन्तो
मन्युं महाराज पिब प्रशाम्य ॥ ६८
रोगार्दिता न फलान्याद्रियन्ते
न वै लभन्ते विषयेषु तत्त्वम् ।
दुःखोपेता रोगिणो नित्यमेव
न बुध्यन्ते धनभोगान्नसौख्यम् ॥ ६९
पुरा ह्युक्तं नाकरोस्त्वं वचो मे
द्यूते जितां द्रौपदीं प्रेक्ष्य राजन् ।
दुर्योधनं वारयेत्यक्षवत्यां
कितवत्वं पण्डिता वर्जयन्ति ॥ ७०
न तद्बलं यन्मृदुना विरुध्यते
सूक्ष्मो धर्मस्तरसा सेवितव्यः ।
प्रध्वंसिनी क्रूरसमाहिता श्री-
र्मृदुप्रौढा गच्छति पुत्रपौत्रान् ॥ ७१
धार्तराष्ट्राः पाण्डवान्पालयन्तु
पाण्डोः सुतास्तव पुत्रांश्च पान्तु ।
एकारिमित्राः कुरवो ह्येककार्या
जीवन्तु राजन्सुखिनः समृद्धाः ॥ ७२

---

शान्तिम् ॥ ५२ ॥ दानपुण्यं दानजं पुण्यं । वेदपुण्यं वेदोक्तयागाद्यनुष्ठानजं पुण्यं तत्तत्फलमित्यर्थः ॥ ५३ ॥ तस्यान्ते स्वधीतादीनां कर्मणामन्ते ॥ ५४ ॥ योगः अलब्धलाभः । क्षेमं लब्धपरिपालनम् । तदुभयम् ॥ ५७ ॥ संपन्नं क्षीरादिसंपत्तिः ॥ ५८ ॥ एकजः एकाकी । प्रसह्यः शक्यः ॥ ६२ ॥ सधनतां ऋते विना । अनातुरत्वात् ऋते च ॥ ६७ ॥ प्रशाम्य शान्तिं क्षमां प्राप्नुहि ॥ ६८ ॥ फलानि पुत्रपश्वादीनि । तत्त्वमिष्टानिष्टविवेकं पित्तोपहतरसनत्वात् । एवं सर्वत्र । भोगः स्त्र्यादिसङ्गः । धनादिजं सुखं लब्धमपि न बुध्यन्ते । अतः संतापं जागरादिद्वारा रोगोत्पादकं त्यजेत्यर्थः ॥ ६९ ॥ कितवत्वं द्यूतप्रियत्वम् ॥ ७० ॥

मेढीभूतः कौरवाणां त्वमद्य
त्वय्याधीनं कुरुकुलमाजमीढ ।
पार्थान्बालान्वनवासप्रतप्ता-
न्गोपायस्व स्वं यशस्तात रक्षन् ॥ ७३

सन्धत्स्व त्वं कौरव पाण्डुपुत्रै-
र्मा तेऽन्तरं रिपवः प्रार्थयन्तु ।
सत्ये स्थितास्ते नरदेव सर्वे
दुर्योधनं स्थापय त्वं नरेन्द्र ॥ ७४

॥ इति श्रीमन्महाभारते उद्योगपर्वणि प्रजागरपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

## सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

धृतराष्ट्रेण अल्पायुष्ट्वकारणप्रश्ने विदुरेण तदभिधाय नीतिकथनपूर्वकं कुरुपाण्डवसन्धिकरणविधानम् ॥ १ ॥

विदुर उवाच ।
सप्तदशेमान्राजेन्द्र मनुः स्वायंभुवोऽब्रवीत् ।
वैचित्रवीर्य पुरुषानाकाशं मुष्टिभिर्घ्नतः ॥ १
तानेवेन्द्रस्य च धनुरनाम्यं नमतो ब्रवीत् ।
अथो मरीचिनः पादानग्राह्यान्गृह्णतस्तथा ॥ २
यश्चाशिष्यं शास्ति वै यश्च तुष्ये-
द्यश्चातिवेलं भजते द्विषन्तम् ।
स्त्रियश्च यो रक्षति भद्रमश्नुते
यश्चायाच्यं याचते कत्थते वा ॥ ३
यश्चाभिजातः प्रकरोत्यकार्यं
यश्चाबलो बलिना नित्यवैरी ।
अश्रद्दधानाय च यो ब्रवीति
यश्चाकाम्यं कामयते नरेन्द्र । ४
वध्वाऽवहासं श्वशुरो मन्यते यो
वध्वाऽवसन्नभयो मानकामः ।
परक्षेत्रे निर्वपति यश्च बीजं
स्त्रियं च यः परिवदतेऽतिवेलम् ॥ ५
यश्चापि लब्ध्वा न स्मरामीति वादी
दत्त्वा च यः कत्थति याच्यमानः ।
यश्चासतः सान्त्वमुपानयीत
एतान्नयन्ति निरयं पाशहस्ताः ॥ ६
यस्मिन्यथा वर्तते यो मनुष्य-
स्तस्मिंस्तथा वर्तितव्यं स धर्मः ।
मायाचारो मायया वर्तितव्यः
साध्वाचारः साधुना प्रत्युपेयः ॥ ७
जरा रूपं हरति हि धैर्यमाशा
मृत्युः प्राणान्धर्मचर्यामसूया ।
कामो ह्रियं वृत्तमनार्यसेवा
क्रोधः श्रियं सर्वमेवाभिमानः ॥ ८
धृतराष्ट्र उवाच ।
शतायुरुक्तः पुरुषः सर्ववेदेषु वै यदा ।
नाप्नोत्यथ च तत्सर्वमायुः केनेह हेतुना ॥ ९
विदुर उवाच ।
अतिमानोऽतिवादश्च तथाऽत्यागो नराधिप ।
क्रोधश्चात्मविधित्सा च मित्रद्रोहश्च तानि षट् ॥ १०
एत एवासयस्तीक्ष्णाः कृन्तन्त्यायूंषि देहिनाम् ।
एतानि मानवान्घ्नन्ति न मृत्युर्भद्रमस्तु ते ॥ ११

---

मेढीभूतः खलस्तम्भीभूतः स्वयं निर्व्यापारोपि परितः संचरमाणानां बलीवर्दानामिव पुत्राणां यथेष्टप्रचारनिरोधकः ॥ ७३ ॥ अन्तरं भेदम् । स्थापय युद्धान्निवर्तयस्व ॥ ७४ ॥ षट्त्रिंशोऽध्यायः ॥ ३६ ॥

नमतः नामयतः । मरीचिनः मरीचिमतः सूर्यचन्द्रादेः । व्रीह्यादित्वान्मत्वर्थीय इनिः । पादान् रश्मीन् ॥ २ ॥ अशिष्यं शासनानर्हम् । तुष्येत् अल्पलाभेनेति शेषः । भद्रमश्नुत इति । शत्रुसेवया स्त्रीरक्षया च यो भद्रमश्नुते तौ द्वौ मूर्खावित्यर्थः । नो रक्षतीति ङ. पाठः ॥ ३ ॥ अभिजातः कुलीनः ॥ ४ ॥ श्वशुरः सन् यो वध्वा पुत्रभार्यया सह अवहासं परिहासं तत्पित्रादिभिरिव मन्यते स एकादशः । वध्वा स्नुषया भूतया अवसन्नभयो नष्टभयः वधूपित्रादिभिरापदि त्रातोपि तत्रैव मानं कामयते यः स द्वादशो मूर्खः । वध्वावासमिति ङ. पाठः ॥ ५ ॥ अत्यागः अतिशयितमागोऽपराधः । आत्मविधित्सेति पोषणार्थस्य धाञः सनि रूपम् । आत्मपोषणेच्छा शिश्नोदरपरायणतेत्यर्थः ॥ १० ॥ असयः खड्गाः । भद्रमस्तु ते एतेषां षण्णां

विश्वस्तस्यैति यो दारान्यश्चापि गुरुतल्पगः ।
वृषलीपतिर्द्विजो यश्च पानपश्चैव भारत ॥ १२
आदेशकृद्वृत्तिहन्ता द्विजानां प्रेषकश्च यः ।
शरणागतहा चैव सर्वे ब्रह्महणः समाः ।
एतैः समेत्य कर्तव्यं प्रायश्चित्तमिति श्रुतिः १३
गृहीतवाक्यो नयविद्वदान्यः
शेषान्नभोक्ता ह्यविहिंसकश्च ।
नानर्थकृत्याकुलितः कृतज्ञः
सत्यो मृदुः स्वर्गमुपैति विद्वान् ॥ १४
सुलभाः पुरुषा राजन्सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १५
यो हि धर्मं समाश्रित्य हित्वा भर्तुः प्रियाप्रिये ।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥ १६
त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ १७
आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ १८
द्यूतमेतत्पुरा कल्पे दृष्टं वैरकरं नृणाम् ।
तस्माद्द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥ १९
उक्तं मया द्यूतकालेऽपि राज-
न्नेदं युक्तं वचनं प्रातिपेय ।
तदौषधं पथ्यमिवातुरस्य
न रोचते तव वैचित्रवीर्य ॥ २०
काकैरिमांश्चित्रबर्हान्मयूरान्
पराजयेथाः पाण्डवान्ध
हित्वा सिंहान्क्रोष्टुकान्गूहमानः
प्राप्ते काले शोचिता त्वं नरेन्द्र ॥ २१
यस्तात न क्रुध्यति सर्वकालं
भृत्यस्य भक्तस्य हिते रतस्य ।
तस्मिन्भृत्या भर्तरि विश्वसन्ति
न चैनमापत्सु परित्यजन्ति ॥ २२
न भृत्यानां वृत्तिसंरोधनेन
राज्यं धनं सञ्जिघृक्षेदपूर्वम् ।
त्यजन्ति ह्येनं वञ्चिता वै विरुद्धाः
स्निग्धा ह्यमात्याः परिहीनभोगाः ॥ २३
कृत्यानि पूर्वं परिसङ्ख्याय सर्वा-
ण्यायव्यये चानुरूपां च वृत्तिम् ।
सङ्गृह्णीयादनुरूपान्सहायान्
सहायसाध्यानि हि दुष्कराणि ॥ २४
अभिप्रायं यो विदित्वा तु भर्तुः
सर्वाणि कार्याणि करोत्यतन्द्री ।
वक्ता हितानामनुरक्त आर्यः
शक्तिज्ञ आत्मेव हि सोऽनुकम्प्यः ॥ २५
वाक्यं तु यो नाद्रियतेऽनुशिष्टः
प्रत्याह यश्चापि नियुज्यमानः ।
प्रज्ञाभिमानी प्रतिकूलवादी
त्याज्यः स तादृक् त्वरयैव भृत्यः ॥ २६
अस्तब्धमक्लीबमदीर्घसूत्रं
सानुक्रोशं श्लक्ष्णमहार्यमन्यैः ।
अरोगजातीयमुदारवाक्यं
दूतं वदन्त्यष्टगुणोपपन्नम् ॥ २७
न विश्वासाज्जातु परस्य गेहे
गच्छेन्नरश्चेतयानो विकाले ।
न चत्वरे निशि तिष्ठेन्निगूढो
न राजकाम्यां योषितं प्रार्थयीत ॥ २८
न निह्नवं मन्त्रगतस्य गच्छे-
त्संसृष्टमन्त्रस्य कुसङ्गतस्य ।
न च ब्रूयान्नाश्वसिमि त्वयीति
सकारणं व्यपदेशं तु कुर्यात् ॥ २९
घृणी राजा पुंश्चली राजभृत्यः
पुत्रो भ्राता विधवा बालपुत्रा ।

---

त्यागेन तव पुत्राः शतायुषो भवन्त्वित्यर्थः ॥ ११ ॥ वृषली शूद्रा । द्विजस्त्रैवर्णिकः । पानपः मद्यपः ॥ १२ ॥ आदेशकृत् ग्रामणीः । प्रेषकः द्विजान् दास्ये नियोजयन् । समेत्य संसृज्य ॥ १३ ॥ परिसङ्ख्याय साध्यासाध्यनिश्चयं कृत्वा । तथा वृत्तिं भृत्यजीविकां आयव्ययानुरूपां कृत्वेत्यर्थः ॥ २४ ॥ अदीर्घसूत्रं क्षिप्रकारिणम् ॥ २७ ॥ किंतु मम किंचित्कार्यमस्तीति । तथा व्यपदेशं व्याजं कृत्वा तादृशान्मन्त्रादपसरेदेवेत्यर्थः ॥ २९ ॥ एते व्यवहारे धनदानादौ वर्जनीयाः द्रव्यनाशभयात । एतेभ्यो

सेनाजीवी चोद्धृतभूतिरेव
व्यवहारेषु वर्जनीयाः स्युरेते ॥ ३०
अष्टौ गुणाः पुरुषं दीपयन्ति
प्रज्ञा च कौल्यं च श्रुतं दमश्च ।
पराक्रमश्चाबहुभाषिता च
दानं यथाशक्ति कृतज्ञता च ॥ ३१
एतान्गुणास्तात महानुभावा-
नेको गुणः संश्रयते प्रसह्य ।
राजा यदा सत्कुरुते मनुष्यं
सर्वान्गुणानेष गुणो बिभर्ति ॥ ३२
गुणा दश स्नानशीलं भजन्ते
बलं रूपं स्वरवर्णप्रशुद्धिः ।
स्पर्शश्च गन्धश्च विशुद्धता च
श्रीः सौकुमार्यं प्रवराश्च नार्यः ॥ ३३
गुणाश्च षण्मितभुक्तं भजन्ते
आरोग्यमायुश्च बलं सुखं च ।
अनाविलं चास्य भवत्यपत्यं
न चैनमाद्यून इति क्षिपन्ति ॥ ३४
अकर्मशीलं च महाशनं च
लोकद्विष्टं बहुमायं नृशंसम् ।
अदेशकालज्ञमनिष्टवेष-
मेतान्गृहे न प्रतिवासयेत ॥ ३५
कदर्यमाक्रोशकमश्रुतं च
वनौकसं धूर्तममान्यमानिनम् ।
निष्ठूरिणं कृतवैरं कृतघ्न-
मेतान्भृशार्तोपि न जातु याचेत् ॥ ३६
संक्लिष्टकर्माणमतिप्रमादं
नित्यानृतं चादृढभक्तिकं च ।
विसृष्टरागं पटुमानिनं चा-
प्येतान्न सेवेत नराधमान्षट् ॥ ३७
सहायबन्धना ह्यर्थाः सहायाश्चार्थबन्धनाः
अन्योन्यबन्धनावेतौ विनान्योन्यं न सिद्ध्यतः॥३८

उत्पाद्य पुत्राननृणाश्च कृत्वा
वृत्तिं च तेभ्योऽनुविधाय कांचित् ।
स्थाने कुमारीः प्रतिपाद्य सर्वा
अरण्यसंस्थोऽथ मुनिर्बुभूषेत् ॥ ३९
हितं यत्सर्वभूतानामात्मनश्च सुखावहम् ।
तत्कुर्यादीश्वरो ह्येतन्मूलं सर्वार्थसिद्धये ॥ ४०
वृद्धिः प्रभावस्तेजश्च सत्वमुत्थानमेव च ।
व्यवसायश्च यस्य स्यात्तस्यावृत्तिभयं कुतः॥४१
पश्य दोषान्पाण्डवैर्विग्रहे त्वं
यत्र व्यथेयुरपि देवाः सशक्राः ।
पुत्रैर्वैरं नित्यमुद्विग्नवासो
यशःप्रणाशो द्विषतश्च हर्षः ॥ ४२
भीष्मस्य कोपस्तव चैवेन्द्रकल्प
द्रोणस्य राज्ञश्च युधिष्ठिरस्य ।
उत्सादयेल्लोकमिमं प्रवृद्धः
श्वेतो ग्रहस्तिर्यगिवापतन्खे ॥ ४३
तव पुत्रशतं चैव कर्णः पञ्च च पाण्डवाः
पृथिवीमनुशासेयुरखिलां सागराम्बराम् ॥ ४४
धार्तराष्ट्रा वनं राजन्व्याघ्राः पाण्डुसुता मताः ।
मा वनं छिन्धि सव्याघ्रं मा व्याघ्रा नीनशन्वनात्
न स्याद्वनमृते व्याघ्रान्व्याघ्रा न स्युर्ऋते वनम्।
वनं हि रक्ष्यते व्याघ्रैर्व्याघ्रान्रक्षति काननम् ४६
न तथेच्छन्ति कल्याणान्परेषां वेदितुं गुणान् ।
यथैषां ज्ञातुमिच्छन्ति नैर्गुण्यं पापचेतसः ॥ ४७
अर्थसिद्धिं परामिच्छन्धर्ममेवादितश्चरेत् ।
नहि धर्मादपैत्यर्थः स्वर्गलोकादिवामृतम् ॥ ४८
यस्यात्मा विरतः पापात्कल्याणे च निवेशितः।
तेन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ॥ ४९
यो धर्ममर्थं कामं च यथाकालं निषेवते ।
धर्मार्थकामसंयोगं सोऽमुत्रेह च विन्दति ॥ ५०
सन्नियच्छति यो वेगमुत्थितं क्रोधहर्षयोः ।
स श्रियो भाजनं राजन्यश्चापत्सु न मुह्यति ॥५१

न ग्राह्यं च। अधमर्णो घृणी लज्जावांश्चेदतिनिर्बन्धेन याच्यमानः प्राणानेव जह्यात् ॥ ३० ॥ मितभुक्तं मितभोजिनम् । आद्यूनो बहुभोजी ॥ ३४ ॥ कदर्यं अदातारम् ॥ ३६ ॥ संक्लिष्टकर्माणं आततायिनम् ॥ ३७ ॥ अवृत्तिर्जीविकाया अभावः ॥ ४१ ॥ श्वेतो ग्रहः धूमकेतुः ॥ ४३ ॥

बलं पञ्चविधं नित्यं पुरुषाणां निबोध मे ।
यत्तु बाहुबलं नाम प्रथमं बलमुच्यते ॥ ५२
अमात्यलाभो भद्रं ते द्वितीयं बलमुच्यते ।
तृतीयं धनलाभं तु बलमाहुर्मनीषिणः ॥ ५३
यत्त्वस्य सहजं राजन्पितृपैतामहं बलम् ।
अभिजातबलं नाम तच्चतुर्थं बलं स्मृतम् ॥ ५४
येन त्वेतानि सर्वाणि सङ्गृहीतानि भारत ।
यद्बलानां बलं श्रेष्ठं तत्प्रज्ञाबलमुच्यते ॥ ५५
महते योऽपकाराय नरस्य प्रभवेन्नरः ।
तेन वैरं समासज्य दूरस्थोऽस्मीति नाश्वसेत् ॥ ५६
स्त्रीषु राजसु सर्पेषु स्वाध्यायप्रभुशत्रुषु ।
भोगेष्वायुषि विश्वासं कः प्राज्ञः कर्तुमर्हति ॥ ५७

प्रज्ञाशरेणाभिहतस्य जन्तो-
श्चिकित्सकाः सन्ति न चौषधानि ।
न होममन्त्रा न च मङ्गलानि
नाथर्वणा नाप्यगदाः सुसिद्धाः ॥ ५८

सर्पश्चाग्निश्च सिंहश्च कुलपुत्रश्च भारत
नावज्ञेया मनुष्येण सर्वे ह्येतेऽतितेजसः ॥ ५९
अग्निस्तेजो महल्लोके गूढस्तिष्ठति दारुषु ।
तद्दारु यावन्नोद्दीप्यते परैः ॥ ६०
स एव खलु दारुभ्यो यदा निर्मथ्य दीप्यते ।
तद्दारु च वनं चान्यन्निर्दहत्याशु तेजसा ॥ ६१
एवमेव कुले जाताः पावकोपमतेजसः ।
क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते ॥ ६२
लताधर्मा त्वं सपुत्रः सालाः पाण्डुसुता मताः ।
न लता वर्धते जातु महाद्रुममनाश्रिता ॥ ६३

वनं राजंस्तव पुत्रोऽम्बिकेय
सिंहान्वने पाण्डवांस्तात विद्धि ।
सिंहैर्विहीनं हि वनं विनश्येत्
सिंहा विनश्येयुर्ऋते वनेन ॥ ६४

॥ इति श्रीमन्महाभारते उद्योगपर्वणि प्रजागरपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

## अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

विदुरेण धृतराष्ट्रंप्रति नीतिकथनपूर्वकं पाण्डवेभ्यो राज्याप्रदाने दुर्योधनस्य राज्यभ्रंशकथनम् ॥ १ ॥

विदुर उवाच ।
ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥ १

पीठं दत्त्वा साधवेऽभ्यागताय
आनीयापः परिनिर्णिज्य पादौ ।
सुखं पृष्ट्वा प्रतिवेद्यात्मसंस्थां
ततो दद्यादन्नमवेक्ष्य धीरः ॥ २

यस्योदकं मधुपर्कं च गां च
न मन्त्रवित्प्रतिगृह्णाति गेहे ।
लोभाद्भयादथ कार्पण्यतो वा
तस्यानर्थं जीवितमाहुरार्याः ॥ ३

चिकित्सकः शल्यकर्तावकीर्णी
स्तेनः क्रूरो मद्यपो भ्रूणहा च ।
सेनाजीवी श्रुतिविक्रायकश्च
भृशं प्रियोऽप्यतिथिर्नोदकार्हः ॥ ४

अविक्रेयं लवणं पक्वमन्नं
दधि क्षीरं मधु तैलं घृतं च ।
तिला मांसं फलमूलानि शाकं
रक्तं वासः सर्वगन्धा गुडाश्च ॥ ५

अरोषणो यः समलोष्टाश्मकाञ्चनः
प्रहीणशोको गतसन्धिविग्रहः ।

---

अभिजातबलं कुलबलम् ॥ ५४ ॥ कुलपुत्रो ज्ञातिः ॥ ५९ ॥ कुले जाताः पाण्डवाः ॥ ६२ ॥ सालाः महावृक्षाः ॥ ६३ ॥ सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

आयति आगच्छति ॥ १ ॥ निर्णिज्य प्रक्षाल्य । आत्मसंस्थां स्वस्थितिम् ॥ २ ॥ अवकीर्णी नष्टब्रह्मचर्यः । नोदकार्हः उदकमात्रानर्होऽपि अतिथिः भृशं प्रियः ॥ ४ ॥

निन्दाप्रशंसोपरतः प्रियाप्रिये
त्यजन्नुदासीनवदेष भिक्षुकः ॥
नीवारमूलेङ्गुदशाकवृत्तिः
सुसंयतात्माग्निकार्येषु चोद्यः ।
वने वसन्नतिथिष्वप्रमत्तो
धुरन्धरः पुण्यकृदेष तापसः ॥ ७
अपकृत्य बुद्धिमतो दूरस्थोऽस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥८
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ९
अनीर्षुर्गुप्तदारश्च संविभागी प्रियंवदः ।
श्लक्ष्णो मधुरवाक्स्त्रीणां न चासां वशगो भवेत् ॥
पूजनीया महाभागाः पुण्याश्च गृहदीप्तयः ।
स्त्रियः श्रियो गृहस्योक्तास्तस्माद्रक्ष्या विशेषतः ११
पितुरन्तःपुरं दद्यान्मातुर्दद्यान्महानसम् ।
गोषु चात्मसमं दद्यात्स्वयमेव कृषिं व्रजेत् ।
भृत्यैर्वाणिज्यचारं च पुत्रैः सेवेत च द्विजान् १२
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥१३
नित्यं सन्तः कुले जाताः पावकोपमतेजसः ।
क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते ॥१४
यस्य मन्त्रं न जानन्ति बाह्याश्चाभ्यन्तराश्च ये ।
स राजा सर्वतश्चक्षुश्चिरमैश्वर्यमश्नुते ॥ १५
करिष्यन्न प्रभाषेत कृतान्येव तु दर्शयेत् ।
धर्मकामार्थकार्याणि तथा मन्त्रो न भिद्यते ॥१६
गिरिपृष्ठमुपारुह्य प्रासादं वा रहोगतः ।
अरण्ये निःशलाके वा तत्र मन्त्रोऽभिधीयते ॥१७
नासुहृत्परमं मन्त्रं भारतार्हति वेदितुम् ।
अपण्डितो वापि सुहृत्पण्डितो वाप्यनात्मवान् ॥
नापरीक्ष्य महीपालः कुर्यात्सचिवमात्मनः ।
अमात्ये ह्यर्थलिप्सा च मन्त्ररक्षणमेव च ॥ १९
कृतानि सर्वकार्याणि यस्य पारिषदा विदुः ।
धर्मे चार्थे च कामे च स राजा राजसत्तमः ।
गूढमन्त्रस्य नृपतेस्तस्य सिद्धिरसंशयम् ॥ २०
अप्रशस्तानि कार्याणि यो मोहादनुतिष्ठति ।
स तेषां विपरिभ्रंशाद्भ्रश्यते जीवितादपि ॥ २१
कर्मणां तु प्रशस्तानामनुष्ठानं सुखावहम् ।
तेषामेवाननुष्ठानं पश्चात्तापकरं मतम् ॥ २२
अनधीत्य यथा वेदान्न विप्रः श्राद्धमर्हति ।
एवमश्रुतषाड्गुण्यो न मन्त्रं श्रोतुमर्हति ॥ २३
स्थानवृद्धिक्षयज्ञस्य षाड्गुण्यविदितात्मनः ।
अनवज्ञातशीलस्य स्वाधीना पृथिवी नृप ॥ २४
अमोघक्रोधहर्षस्य स्वयं कृत्यान्ववेक्षिणः ।
आत्मप्रत्ययकोशस्य वसुदैव वसुन्धरा ॥ २५
नाममात्रेण तुष्येत छत्रेण च महीपतिः ।
भृत्येभ्यो विसृजेदर्थान्नैकः सर्वहरो भवेत् ॥ २६
ब्राह्मणं ब्राह्मणो वेद भर्ता वेद स्त्रियं तथा ।
अमात्यं नृपतिर्वेद राजा राजानमेव च ॥ २७
न शत्रुर्वशमापन्नो मोक्तव्यो वध्यतां गतः ।
न्यग्भूत्वा पर्युपासीत वध्यं हन्याद्बले सति ॥२८
अहताद्धि भयं तस्माज्जायते नचिरादिव ॥ २९
दैवतेषु प्रयत्नेन राजसु ब्राह्मणेषु च ।
नियन्तव्यः सदा क्रोधो वृद्धबालातुरेषु च ॥ ३०
निरर्थं कलहं प्राज्ञो वर्जयेन्मूढसेवितम् ।
कीर्तिं च लभते लोके न चानर्थेन युज्यते ॥३१
प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ।
न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ॥ ३२
न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये ।
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ॥ ३३
विद्याशीलवयोवृद्धान्बुद्धिवृद्धांश्च भारत ।
धनाभिजातवृद्धांश्च नित्यं मूढोऽवमन्यते ॥ ३४
अनार्यवृत्तमप्राज्ञमसूयकमधार्मिकम् ।
अनर्थाः क्षिप्रमायान्ति वाग्दुष्टं क्रोधनं तथा ३५
अविसंवादनं दानं समयस्याव्यतिक्रमः ।

---

सर्वतश्चक्षुश्चारैः परमन्त्रं जानन् ॥ १५ ॥ निःशलाके रहसि ॥१७॥ पारिषदाः सभासदः ॥२०॥ षाड्गुण्यं षण्णां संधिविग्रहयानासनद्वैधीभावसमाश्रयाणां समूहः न श्रुतो येन सः ॥ २३ ॥

आत्मैव प्रत्ययो ज्ञानं यस्य स्वयमेव ज्ञातकोशस्य ॥ २५ ॥ नाममात्रेणैव राजा भवेत् । भोगांस्तु भृत्यैः समानानेव भुञ्जीत ॥ २६ ॥

चातुर्होत्रं च धुर्या मे शरा दर्भा हविर्यशः ॥१३
आत्मयज्ञेन नृपते इष्ट्वा वैवस्वतं रणे ।
विजित्य च समेष्यावो हतामित्रौ श्रिया वृतौ १४
अहं च तात कर्णश्च भ्राता दुःशासनश्च मे ।
एते वयं हनिष्यामः पाण्डवान्समरे त्रयः ॥ १५
अहं हि पाण्डवान्हत्वा प्रशास्ता पृथिवीमिमाम् ।
मां वा हत्वा पाण्डुपुत्रा भोक्तारः पृथिवीमिमां १६
त्यक्तं मे जीवितं राज्यं धनं सर्वं च पार्थिव ।
न जातु पाण्डवैः सार्धं वसेयमहमच्युत ॥ १७
यावद्धि सूच्यास्तीक्ष्णाया विध्येदग्रेण मारिष ।
तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान्प्रति ॥ १८
धृतराष्ट्र उवाच ।
सर्वान्वस्तात शोचामि त्यक्तो दुर्योधनो मया ।
ये मन्दमनुयास्यध्वं यान्तं वैवस्वतक्षयम् ॥ १९
रुरूणामिव यूथेषु व्याघ्राः प्रहरतां वराः ।
वरान्वरान्हनिष्यन्ति समेता युधि पाण्डवाः २०
प्रतीपमिव मे भाति युयुधानेन भारती ।
व्यस्ता सीमन्तिनी ग्रस्ता प्रमृष्टा दीर्घबाहुना॥२१
संपूर्णं पूरयन्भूयो धनं पार्थस्य माधवः ।
शैनेयः समरे स्थाता बीजवत्प्रवपञ्शरान् ॥ २२
सेनामुखे प्रयुद्धानां भीमसेनो भविष्यति ।
तं सर्वे संश्रयिष्यन्ति प्राकारमकुतोभयम् ॥ २३
यदा द्रक्ष्यसि भीमेन कुञ्जरान्विनिपातितान् ।
विशीर्णदन्तान्गिर्याभान्भिन्नकुम्भान्सशोणितान्
तानभिप्रेक्ष्य सङ्ग्रामे विशीर्णानिव पर्वतान् ।
भीतो भीमस्य संस्पर्शात्स्मर्तासि वचनस्य मे॥२५
निर्दग्धं भीमसेनेन सैन्यं रथहयद्विपम् ।
गतिमग्नेरिव प्रेक्ष्य स्मर्तासि वचनस्य मे ॥ २६
महद्वो भयमागामि न चेच्छाम्यथ पाण्डवैः ।
गदया भीमसेनेन हताः शममुपैष्यथ ॥ २७
महावनमिव च्छिन्नं यदा द्रक्ष्यसि पातितम् ।
बलं कुरूणां भीमेन तदा स्मर्तासि मे वचः॥२८
वैशंपायन उवाच ।
एतावदुक्त्वा राजा तु सर्वांस्तान्पृथिवीपतीन् ।
अनुभाष्य महाराज पुनः पप्रच्छ सञ्जयम् ॥२९

॥ इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

## एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

पुनः पृष्टेन सञ्जयेन धृतराष्ट्रंप्रति अर्जुनवाक्यकथनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
ब्रूहि सञ्जय यच्छेषं वासुदेवादनन्तरम् ।
यदर्जुन उवाच त्वां परं कौतूहलं हि मे ॥ १
सञ्जय उवाच ।
वासुदेववचः श्रुत्वा कुन्तीपुत्रो धनञ्जयः ।
उवाच काले दुर्धर्षो वासुदेवस्य शृण्वतः ॥ २
पितामहं शान्तनवं धृतराष्ट्रं च सञ्जय ।
द्रोणं कृपं च शल्यं च महाराजं च बाह्लिकम्॥३
द्रौणिं च सौमदत्तिं च शकुनिं चापि सौबलम् ।
दुश्शासनं शलं चैव पुरुमित्रं विविंशतिम् ॥ ४
विकर्णं चित्रसेनं च जयत्सेनं च पार्थिवम् ।
विन्दानुविन्दावावन्त्यौ दुर्मुखं चापि पौरवम्॥५
सैन्धवं दुस्सहं चैव भूरिश्रवसमेव च ।
भगदत्तं च राजानं जलसन्धं च पौरवम् ॥ ६
ये चाप्यन्ये पार्थिवास्तत्र योद्धुं
समागताः कौरवाणां प्रियार्थम् ।
मुमूर्षवः पाण्डवाग्नौ प्रदीप्ते
समानीता धार्तराष्ट्रेण सूत ॥ ७
यथान्यायं कुशलं वन्दनं च
समागता मद्वचनेन वाच्याः ॥ ८

चातुर्होत्रं चतुर्णां होतॄणां ऋत्विजां समाहारः ॥१३॥ भारती

अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

इदं ब्रूयाः सञ्जय राजमध्ये
दुर्योधनं पापकृतां प्रधानम् ।
अमर्षणं दुर्मतिं राजपुत्रं
पापात्मानं धार्तराष्ट्रं सुलुब्धम् ।
सर्वं ममैतद्वचनं समग्रं
सहामात्यं सञ्जय श्रावयेथाः ॥ ९

एवं परिष्वज्य धनञ्जयो मां
ततोऽर्थवद्धर्मवच्चापि वाक्यम् ।
प्रोवाचेदं वासुदेवं समीक्ष्य
पार्थो धीमाँल्लोहितान्तायताक्षः ॥ १०

यथाश्रुतं ते वदतो महात्मनो
यदुप्रवीरस्य वचः समाहितम् ।
तथैव वाच्यं भवतापि मद्वचः
समागतेषु क्षितिपेषु सर्वशः ॥ ११

शराग्निधूमे रथनेमिनादिते
धनुस्स्रुवेणास्त्रबलापहारिणा ।
यथा न होमः क्रियते महामृधे
तथा समेत्य प्रयतध्वमादृताः ॥ १२

न चेत्प्रयच्छध्वममित्रघातिनो
युधिष्ठिरस्यार्धमभीप्सितं स्वकम् ।
नयामि वः साश्वपदातिकुञ्जरा-
न्दिशं पितॄणामशिवां शितैः शरैः ॥ १३

ततोऽहमामन्त्र्य चतुर्भुजं हरिं
धनञ्जयं चैव नमस्य सत्वरम् ।
जवेन संप्राप्त इहामरद्युते
तवान्तिकं प्रापयितुं वचो महत् ॥ १४

॥ इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

## षष्टितमोऽध्यायः ॥ ६० ॥

धृतराष्ट्रेण दुर्योधनं प्रति स्वपरपक्षयोः बलाबलविमर्शनेन पाण्डवेषु पुत्रप्रेम्णा धर्मादिदेवानां साहाय्यकरणाभिधानपूर्वकं स्वस्य शमाभिरोचनवचनम् ॥ १ ॥

वैशंपायन उवाच ।
सञ्जयस्य वचः श्रुत्वा प्रज्ञाचक्षुर्जनेश्वरः ।
ततः सङ्ख्यातुमारेभे तद्वचो गुणदोषतः ॥ १
प्रसङ्ख्याय च सौक्ष्म्येण गुणदोषान्विचक्षणः ।
यथावन्मतितत्त्वेन जयकामः सुतान्प्रति ॥ २
बलाबलं विनिश्चित्य याथातथ्येन बुद्धिमान् ।
'यदा तु मेने भूयिष्ठं तद्वचो गुणदोषतः ॥ ३
पुनरेव कुरूणां च पाण्डवानां च बुद्धिमान् ।'
शक्तिं सङ्ख्यातुमारेभे तदा वै मनुजाधिपः ॥ ४
देवमानुषयोः शक्त्या तेजसा चैव पाण्डवान् ।
कुरूञ्शक्त्याऽल्पतरया दुर्योधनमथाब्रवीत् ॥ ५
दुर्योधनेयं चिन्ता मे शश्वन्न व्युपशाम्यति ।
सत्यं ह्येतदहं मन्ये प्रत्यक्षं नानुमानतः ॥ ६
आत्मजेषु परं स्नेहं सर्वभूतानि कुर्वते ।
प्रियाणि चैषां कुर्वन्ति यथाशक्ति हितानि च ७
एवमेवोपकर्तॄणां प्रायशो लक्षयामहे ।
इच्छन्ति बहुलं सन्तः प्रतिकर्तुं महत्प्रियम् ॥ ८
अग्निः साचिव्यकर्ता स्यात्खाण्डवे तत्कृतं स्मरन् ।
अर्जुनस्यापि भीमेऽस्मिन्कुरुपाण्डुसमागमे ॥ ९
जातिगृध्याऽभिपन्नाश्च पाण्डवानामनेकशः ।
धर्मादयः समेष्यन्ति समाहूता दिवौकसः ॥ १०
भीष्मद्रोणकृपादीनां भयादशनिसन्निभम् ।
रिरक्षिषन्तः संरम्भं गमिष्यन्तीति मे मतिः ॥ ११
ते देवैः सहिताः पार्था न शक्याः प्रतिवीक्षितुम् ।
मानुषेण नरव्याघ्रा वीर्यवन्तोऽस्त्रपारगाः ॥ १२
दुरासदं यस्य दिव्यं गाण्डीवं धनुरुत्तमम् ।

---

शक्त्या परिच्छिद्येति शेषः ॥ ५ ॥ भीमे भयंकरे ॥ ९ ॥ जातिगृध्या जन्मग्रहणाद्धेतोः युधिष्ठिरादीनां पितरो धर्मादयोपि तेषां सहायाः सन्ति ॥ १० ॥ षष्टितमोऽध्यायः ॥ ६० ॥

वारुणौ चाक्षयौ दिव्यौ शरपूर्णौ महेषुधी ॥ १३
वानरश्च ध्वजे दिव्यो निःसङ्गो धूमवद्गतिः ।
रथश्च चतुरन्तायां यस्य नास्ति समः क्षितौ ॥ १४
महामेघनिभश्चापि निर्घोषः श्रूयते जनैः ।
महाशनिसमः शब्दः शात्रवाणां भयंकरः ॥ १५
यं चातिमानुषं वीर्ये कृत्स्नो लोको व्यवस्यति ।
देवानामपि जेतारं यं विदुः पार्थिवा रणे ॥ १६
शतानि पञ्च चैवेषून्यो गृह्णन्नेव दृश्यते ।
निमेषान्तरमात्रेण मुञ्चन्दूरं च पातयन् ॥ १७
यमाह भीष्मो द्रोणश्च कृपो द्रौणिस्तथैव च ।
मद्रराजस्तथा शल्यो मध्यस्था ये च मानवाः ॥१८
युद्धायावस्थितं पार्थं पार्थिवैरतिमानुषैः ।
अशक्यं रथशार्दूलं पराजेतुमरिंदमम् ॥ १९
क्षिपत्येकेन वेगेन पञ्चबाणशतानि यः ।
सदृशं बाहुवीर्येण कार्तवीर्यस्य पाण्डवम् ॥ २०
तमर्जुनं महेष्वासं महेन्द्रोपेन्द्रविक्रमम् ।
निघ्नन्तमिव पश्यामि विमर्देऽस्मिन्महाहवे ॥२१
इत्येवं चिन्तयन्कृत्स्नमहोरात्राणि भारत ।
अनिद्रो निःसुखश्चास्मि कुरूणां शमचिन्तया ॥२२
क्षयोदयोऽयं सुमहान्कुरूणां प्रत्युपस्थितः ।
अस्य चेत्कलहस्यान्तः शमादन्यो न विद्यते ॥२३
शमो मे रोचते नित्यं पार्थैस्तात न विग्रहः ।
कुरुभ्यो हि सदा मन्ये पाण्डवाञ्शक्तिमत्तरान् २४

॥ इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

## एकषष्टितमोऽध्यायः ॥ ६१ ॥

दुर्योधनेन सहेतुकं पाण्डवानां दैवैः साहाय्यकरणपक्षप्रतिक्षेपः ॥ १ ॥ तथा जलस्तम्भनादिस्वसामर्थ्याभिधान-पूर्वकं स्वेन पाण्डवपराजयकरणाभिधानम् ॥ २ ॥

वैशंपायन उवाच ।
पितुरेतद्वचः श्रुत्वा धार्तराष्ट्रोऽत्यमर्षणः ।
आधाय विपुलं क्रोधं पुनरेवेदमब्रवीत् ॥ १
अशक्या देवसचिवाः पार्थाः स्युरिति यद्भवान् ।
मन्यते तद्भयं व्येतु भवतो राजसत्तम ॥ २
अकामद्वेषसंयोगाल्लोभद्रोहाच्च भारत ।
उपेक्षया च भावानां देवा देवत्वमाप्नुवन् ॥ ३
इति द्वैपायनो व्यासो नारदश्च महातपाः ।
जामदग्न्यश्च रामो नः कथामकथयत्पुरा ॥ ४
नैव मानुषवद्देवाः प्रवर्तन्ते कदाचन ।
कामात्क्रोधात्तथा लोभाद्द्वेषाच्च भरतर्षभ ॥ ५
यदा ह्यग्निश्च वायुश्च धर्म इन्द्रोऽश्विनावपि ।
कामयोगात्प्रवर्तेरन्न पार्था दुःखमाप्नुयुः ॥ ६
तस्मान्न भवता चिन्ता कार्यैषा स्यात्कथंचन ।
दैवेष्वपेक्षका ह्येते शश्वद्भावेषु भारत ॥ ७
अथ चेत्कामसंयोगाद्द्वेषो लोभश्च लक्ष्यते ।
देवेषु देवप्रामाण्यान्नैषां तद्विक्रमिष्यति ॥ ८
मयाऽभिमन्त्रितः शश्वज्जातवेदाः प्रशाम्यति ।
दिधक्षुः सकलाँल्लोकान्परिक्षिप्य समन्ततः ॥ ९
यद्वा परमकं तेजो येन युक्ता दिवौकसः ।
ममाप्यनुपमं भूयो देवेभ्यो विद्धि भारत ॥ १०
विदीर्यमाणां वसुधां गिरीणां शिखराणि च ।
लोकस्य पश्यतो राजन्स्थापयाम्यभिमन्त्रणात् ११
चेतनाचेतनस्यास्य जङ्गमस्थावरस्य च ।
विनाशाय समुत्पन्नमहं घोरं महास्वनम् ॥ १२
अश्मवर्षं च वायुं च शमयामीह नित्यशः ।
जगतः पश्यतोऽभीक्ष्णं भूतानामनुकम्पया ॥१३
स्तम्भितास्वप्सु गच्छन्ति मया रथपदातयः ।
देवासुराणां भावानामहमेकः प्रवर्तिता ॥ १४
अक्षौहिणीभिर्यान्देशान्यामि कार्येण केनचित् ।

अकामेति कामद्वेषयोरसंयोगात्। लोभद्रोहात् लोभे द्रोहकरणात् लोभत्यागादित्यर्थः ॥ ३ ॥ एते देवाः दैवेषु भावेषु शमदमादिषु शश्वदपेक्षका अपेक्षमाणाः नत्वासुरेषु कामक्रोधादिषु ॥ ७ ॥ कामादिमता कृतमपि निष्फलं भविष्यतीत्यर्थः ॥८॥

तत्रापो मे प्रवर्तन्ते यत्र यत्राभिकामये ॥ १५
भयानकानि विषये व्यालादीनि न सन्ति मे ।
मन्त्रगुप्तानि भूतानि न हिंसन्ति भयंकराः ॥ १६
निकामवर्षी पर्जन्यो राजन्विषयवासिनाम् ।
धर्मिष्ठाश्च प्रजाः सर्वा ईतयश्च न सन्ति मे ॥१७
अश्विनावथ वाय्वग्नी मरुद्भिः सह वृत्रहा ।
धर्मश्चैव मया द्विष्टान्नोत्सहन्तेऽभिरक्षितुम् ॥ १८
यदि ह्येते समर्थाः स्युर्मद्विषस्त्रातुमञ्जसा ।
न स्म त्रयोदश समाः पार्था दुःखमवाप्नुयुः ॥ १९
नैव देवा न गन्धर्वा नासुरा न च राक्षसाः ।
शक्तास्त्रातुं मया द्विष्टं सत्यमेतद्ब्रवीमि ते ॥ २०
यदभिध्याम्यहं शश्वच्छुभं वा यदि वाऽशुभम् ।
नैतद्विपन्नपूर्वं मे मित्रेष्वरिषु चोभयोः ॥ २१
भविष्यतीदमिति वा यद्ब्रवीमि परन्तप ।
नान्यथा भूतपूर्वं च सत्यवागिति मां विदुः ॥२२
लोकसाक्षिकमेतन्मे माहात्म्यं दिक्षु विश्रुतम् ।
आश्वासनार्थं भवतः प्रोक्तं न श्लाघया नृप ॥ २३
न ह्यहं श्लाघनो राजन्भूतपूर्वः कदाचन ।
असदाचरितं ह्येतद्यदात्मानं प्रशंसति ॥ २४
पाण्डवांश्चैव मत्स्यांश्च पाञ्चालान्केकयैः सह ।
सात्यकिं वासुदेवं च श्रोतासि विजितान्मया ॥२५
सरितः सागरं प्राप्य यथा नश्यन्ति सर्वशः ।
तथैव ते विनङ्क्ष्यन्ति मामासाद्य सहान्वयाः २६
परा बुद्धिः परं तेजो वीर्यं च परमं मम ।
परा विद्या परो योगो मम तेभ्यो विशिष्यते ॥ २७
पितामहश्च द्रोणश्च कृपः शल्यः शलस्तथा ।
अस्त्रेषु यत्प्रजानन्ति सर्वं तन्मयि विद्यते ॥ २८
इत्युक्ते सञ्जयं भूयः पर्यपृच्छत भारत ।
ज्ञात्वा युयुत्सोः कार्याणि प्राप्तकालमरिन्दमः २९

॥ इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

## द्विषष्टितमोऽध्यायः ॥ ६२ ॥

कर्णेन धृतराष्ट्रमनादृत्य पाण्डवहननप्रतिज्ञानम् ॥ १ ॥ तथा भीष्माधिक्षिप्तेन तेन युद्धे भीष्मशमनावधि शस्त्रन्यासं प्रतिज्ञाय स्वभवनगमनम् ॥ २ ॥ भीष्मेण प्रत्यहं अयुतयोधवधप्रतिज्ञा ॥ ३ ॥

वैशंपायन उवाच ।
तथा तु पृच्छन्तमतीव पार्थं
वैचित्रवीर्यं तमचिन्तयित्वा ।
उवाच कर्णो धृतराष्ट्रपुत्रं
प्रहर्षयन्संसदि कौरवाणाम् ॥ १
मिथ्या प्रतिज्ञाय मया यदस्त्रं
रामात्कृतं ब्रह्ममयं पुरस्तात् ।
विज्ञाय तेनास्मि तदैवमुक्त-
स्ते नान्तकाले प्रतिभास्यतीति ॥ २
महापराधे ह्यपि यन्न तेन
महर्षिणाऽहं गुरुणा च शप्तः ।
शक्तः प्रदग्धुं ह्यपि तिग्मतेजाः
ससागरामप्यवनिं महर्षिः ॥ ३
प्रसादितं ह्यस्य मया मनोऽभू-
च्छुश्रूषया स्वेन च पौरुषेण ।
तदस्ति चास्त्रं मम सावशेषं
तस्मात्समर्थोऽस्मि ममैष भारः ॥ ४
निमेषमात्रात्तमृषेः प्रसाद-
मवाप्य पाञ्चालकरूशमत्स्यान् ।
निहत्य पार्थान्सह पुत्रपौत्रै-
र्लोकानहं शस्त्रजितान्प्रपत्स्ये ॥ ५
पितामहस्तिष्ठतु ते समीपे
द्रोणश्च सर्वे च नरेन्द्रमुख्याः ।

अभिध्यामि चिन्तयामि ॥ २१ ॥ एकषष्टितमोऽध्यायः ॥ ६१ ॥
तथेति पार्थं पृच्छन्तं वैचित्रवीर्यं अचिन्तयित्वेति संबन्धः ॥ १ ॥ सावशेषं मम आयुरस्ति । अतोऽन्तकालस्यानुपस्थितत्वा-
त्तदस्त्रं ममास्तीति अहं समर्थोऽस्मि अर्जुनं जेतुमित्यर्थः ॥ ४ ॥ प्रपत्स्ये प्रापयिष्ये ॥ ५ ॥

ऋषिप्रसादेन बलेन गत्वा
पार्थान्हनिष्यामि ममैष भारः ॥ ६
एवं ब्रुवन्तं तमुवाच भीष्मः
किं कत्थसे कालपरीतबुद्धे ।
न कर्ण जानासि यथा प्रधाने
हते हताः स्युर्धृतराष्ट्रपुत्राः ॥ ७
यत्खाण्डवं दाहयता कृतं हि
कृष्णद्वितीयेन धनञ्जयेन ।
श्रुत्वैव तत्कर्म नियन्तुमात्मा
युक्तस्त्वया वै सहबान्धवेन ॥ ८
यां चापि शक्तिं त्रिदशाधिपस्ते
ददौ महात्मा भगवान्महेन्द्रः ।
भस्मीकृतां तां समरे विशीर्णां
चक्राहतां द्रक्ष्यसि केशवेन ॥ ९
यस्ते शरः सर्पमुखो विभाति
सदाऽग्र्यमाल्यैर्महितः प्रयत्नात् ।
स पाण्डुपुत्राभिहतः शरौघैः
सह त्वया यास्यति कर्ण नाशम् ॥ १०
बाणस्य भौमस्य च कर्ण हन्ता
किरीटिनं रक्षति वासुदेवः ।
यस्त्वादृशानां च वरीयसां च
हन्ता रिपूणां तुमुले प्रगाढे ॥ ११

कर्ण उवाच ।
असंशयं वृष्णिपतिर्यथोक्त-
स्तथा च भूयांश्च ततो महात्मा ।
अहं यदुक्तः परुषं तु किंचि-
त्पितामहस्तस्य फलं शृणोतु ॥ १२
न्यस्यामि शस्त्राणि न जातु सङ्ख्ये
पितामहो द्रक्ष्यति मां सभायाम् ।
त्वयि प्रशान्ते तु मम प्रभावं
द्रक्ष्यन्ति सर्वे भुवि भूमिपालाः ॥ १३

वैशंपायन उवाच ।
इत्येवमुक्त्वा स महाधनुष्मान्
हित्वा सभां स्वं भवनं जगाम ।
भीष्मस्तु दुर्योधनमेव राजन्
मध्ये कुरूणां प्रहसन्नुवाच ॥ १४
सत्यप्रतिज्ञः किल सूतपुत्र-
स्तथा स भारं विषहेत कस्मात् ।
व्यूहं प्रतिव्यूह्य शिरांसि भित्त्वा
लोकक्षयं पश्यत भीमसेनात् ॥ १५
आवन्त्यकालिङ्गजयद्रथेषु
चेदिध्वजे तिष्ठति बाह्लिके च ।
अहं हनिष्यामि सदा परेषां
सहस्रशश्चायुतशश्च योधान् ॥ १६
यदैव रामे भगवत्यनिन्द्ये
ब्रह्मब्रुवाणः कृतवांस्तदस्त्रम् ।
तदैव धर्मश्च तपश्च नष्टं
वैकर्तनस्याधमपूरुषस्य ॥ १७

वैशंपायन उवाच ।
तथोक्तवाक्ये नृपतीन्द्र भीष्मे
निक्षिप्य शस्त्राणि गते च कर्णे ।
वैचित्रवीर्यस्य सुतोऽल्पबुद्धि-
र्दुर्योधनः शान्तनवं बभाषे ॥ १८

॥ इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

## त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

दुर्योधनेन भीष्माभिमतपाण्डवजयपक्षप्रतिक्षेपः ॥ १ ॥ तथा भीष्मादिनैरपेक्ष्येण कर्णदुःशासनसङ्गतेन आत्मनैव पाण्डवनिधनप्रतिज्ञा ॥ २ ॥ विदुरेण दमप्रशंसनम् ॥ ३ ॥

दुर्योधन-उवाच ।
सदृशानां मनुष्येषु सर्वेषां तुल्यजन्मनाम् ।
कथमेकान्ततस्तेषां पार्थानां मन्यसे जयम् ॥ १
वयं च तेऽपि तुल्या वै वीर्येण च पराक्रमैः ।

प्रधाने त्वयि हते सति सर्वे हताः स्युरत आत्मानं गोपायेत्युपहासः ॥ ७ ॥ ब्रह्मब्रुवाणः ब्राह्मणोऽहमिति वदन् ॥ १७ ॥

द्विषष्टितमोऽध्यायः ॥ ६२ ॥

समेन वयसा चैव प्रातिभेन श्रुतेन च ॥ २
अस्त्रेण योधयुग्या च शीघ्रत्वे कौशले तथा।
सर्वे स्म समजातीयाः सर्वे मानुषयोनयः ॥ ३
पितामह विजानीषे पार्थेषु विजयं कथम्।
नाहं भवति न द्रोणे न कृपे न च बाह्लिके॥४
अन्येषु च नरेन्द्रेषु पराक्रम्य समारभे।
अहं वैकर्तनः कर्णो भ्राता दुःशासनश्च मे ॥ ५
पाण्डवान्समरे पञ्च हनिष्यामः शितैः शरैः।
ततो राजन्महायज्ञैर्विविधैर्भूरिदक्षिणैः ॥ ६
ब्राह्मणांस्तर्पयिष्यामि गोभिरश्वैर्धनेन च।
यदा परिकरिष्यन्ति ऐणेयानिव तन्तुना।
अतरित्रानिव जले बाहुभिर्मामका रणे ॥ ७
पश्यन्तस्ते परांस्तत्र रथनागसमाकुलान्।
तदा दर्पं विमोक्ष्यन्ति पाण्डवाः स च केशवः ॥८
'सुखान्यवाप्य सहिताः कृत्वा कर्म सुदुस्तरम्।
विस्रब्धास्तु भविष्यामः प्राप्ते काले गतज्वराः ९
वैशंपायन उवाच।
अथाब्रवीन्महाराजो धृतराष्ट्रः सुदुर्मनाः।
विदुरं विदुषां श्रेष्ठं सर्वपार्थिवसंनिधौ ॥ १०
धृतराष्ट्र उवाच।
मोहितो मृत्युपाशेन कालस्य वशमागतः।
तात कर्णेन सहितः पुत्रो दुर्योधनो मम ॥' ११
विदुर उवाच।
इह निःश्रेयसं प्राहुर्वृद्धा निश्चितदर्शिनः।
ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः ॥ १२
तस्य दानं क्षमा सिद्धिर्यथावदुपपद्यते।
दमो दानं तपो ज्ञानमधीतं चानुवर्तते ॥ १३
दमस्तेजो वर्धयति पवित्रं दम उत्तमम्।
विपाप्मा वृद्धतेजास्तु पुरुषो विन्दते महत् ॥१४
क्रव्याद्भ्य इव भूतानामदान्तेभ्यः सदा भयम्।
येषां च प्रतिषेधार्थं क्षत्रं सृष्टं स्वयंभुवा ॥ १५
आश्रमेषु चतुर्ष्वाहुर्दममेवोत्तमं व्रतम्।
तस्य लिङ्गं प्रवक्ष्यामि येषां समुदयो दमः ॥१६
क्षमा धृतिरहिंसा च समता सत्यमार्जवम्।
इन्द्रियाभिजयो धैर्यं मार्दवं ह्रीरचापलम् ॥ १७
अकार्पण्यमसंरम्भः सन्तोषः श्रद्दधानता।
एतानि यस्य राजेन्द्र स दान्तः पुरुषः स्मृतः ॥१८
कामो लोभश्च दर्पश्च मन्युर्निद्रा विकत्थनम्।
मान ईर्ष्या च शोकश्च नैतद्दान्तो निषेवते।
अजिह्ममशठं शुद्धमेतद्दान्तस्य लक्षणम् ॥ १९
अलोलुपस्तथाऽल्पेप्सुः कामानामविचिन्तिता।
समुद्रकल्पः पुरुषः स दान्तः परिकीर्तितः ॥२०
सुवृत्तः शीलसंपन्नः प्रसन्नात्माऽत्मविद्बुधः।
प्राप्येह लोके संमानं सुगतिं प्रेत्य गच्छति ॥२१
अभयं यस्य भूतेभ्यः सर्वेषामभयं यतः।
स वै परिणतप्रज्ञः प्रख्यातो मनुजोत्तमः ॥ २२
सर्वभूतहितो मैत्रस्तस्मान्नोद्विजते जनः।
समुद्र इव गम्भीरः प्रज्ञातृप्तः प्रशाम्यति ॥ २३
कर्मणाऽऽचरितं पूर्वं सद्भिराचरितं च यत्।
तदेवास्थाय मोदन्ते दान्ताः शमपरायणाः ॥२४
नैष्कर्म्यं वा समास्थाय ज्ञानतृप्तो जितेन्द्रियः।
कालाकाङ्क्षी चरँल्लोके ब्रह्मभूयाय कल्पते ॥ २५
शकुनीनामिवाकाशे पदं नैवोपलभ्यते।
एवं प्रज्ञानतृप्तस्य मुनेर्वर्त्म न दृश्यते ॥ २६
उत्सृज्यैव गृहान्यस्तु मोक्षमेवाभिमन्यते।
लोकास्तेजोमयास्तस्य कल्पन्ते शाश्वता दिवि २७

॥ इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

प्रातिभेन समयस्फूर्त्या ॥ २ ॥ योधयुग्या शूरसमृद्ध्या ॥३॥ तरित्रा नौरक्षकाः कर्णधारादयः तद्रहितान् तद्वत् मामकास्तान् रणे बाहुभ्यां परिहरिष्यन्ति ॥ ७ ॥ समुदयः उदयहेतुः ॥ १६ ॥ त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

## चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

विदुरेण शकुनिदृष्टान्तेन ज्ञातिभिर्विरोधस्यानर्थहेतुत्वकथनम् ॥ १ ॥ तथा किरातदृष्टान्तप्रदर्शनेन अत्याशाया अनर्थहेतुताकथनम् ॥ २ ॥ तथा युद्धे जयपराजययोरव्यवस्थितत्वाभिधानम् ॥ ३ ॥

विदुर उवाच ।
शकुनीनामिहार्थाय पाशं भूमावयोजयत् ।
कश्चिच्छाकुनिकस्तात पूर्वेषामिति शुश्रुम ॥ १
तस्मिंस्तौ शकुनौ बद्धौ युगपत्सहचारिणौ ।
तावुपादाय तं पाशं जग्मतुः खचरावुभौ ॥ २
तौ विहायसमाक्रान्तौ दृष्ट्वा शाकुनिकस्तदा ।
अन्वधावदनिर्विण्णो येन येन स्म गच्छतः ॥ ३
तथा तमनुधावन्तमृगयुं शकुनार्थिनम् ।
आश्रमस्थो मुनिः कश्चिद्ददर्शाथ कृताह्निकः ॥ ४
तावन्तरिक्षगौ शीघ्रमनुयान्तं महीचरम् ।
श्लोकेनानेन कौरव्य पप्रच्छ स मुनिस्तदा ॥ ५
विचित्रमिदमाश्चर्यं मृगहन्प्रतिभाति मे ।
प्लवमानौ हि खचरौ पदातिरनुधावसि ॥ ६
शाकुनिक उवाच ।
पाशमेकमुभावेतौ सहितौ हरतो मम ।
यत्र वै विवदिष्येते तत्र मे वशमेष्यतः ॥ ७
विदुर उवाच ।
तौ विवादमनुप्राप्तौ शकुनौ मृत्युसन्धितौ ।
विगृह्य च सुदुर्बुद्धी पृथिव्यां संनिपेततुः ॥ ८
तौ युध्यमानौ संरब्धौ मृत्युपाशवशानुगौ ।
उपसृत्य प्रमत्तौ तौ जग्राह मृगहा तदा ॥ ९
एवं ये ज्ञातयोऽर्थेषु मिथो गच्छन्ति विग्रहम् ।
ते मृत्युवशमायान्ति शकुनाविव विग्रहात् ॥१०
संभोजनं संकथनं संप्रश्नोऽथ समागमः ।
एतानि ज्ञातिकार्याणि न विरोधः कदाचन ॥११
ये स्म काले सुमनसः सर्वे वृद्धानुपासते ।
सिंहगुप्तमिवारण्यमप्रधृष्या भवन्ति ते ॥ १२
येऽर्थं सन्ततमासाद्य दीना इव समासते ।
श्रियं ते संप्रयच्छन्ति द्विषद्भ्यो भरतर्षभ ॥ १३
धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च ।
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ १४
इदमन्यत्प्रवक्ष्यामि यथा दृष्टं गिरौ मया ।
श्रुत्वा तदपि कौरव्य यथा श्रेयस्तथा कुरु ॥१५
वयं किरातैः सहिता गच्छामो गिरिमुत्तरम् ।
ब्राह्मणैर्देवकल्पैश्च विद्याजम्भकवार्तिकैः ॥ १६
कुञ्जभूतं गिरिं सर्वमभितो गन्धमादनम् ।
दीप्यमानौषधिगणं सिद्धगन्धर्वसेवितम् ॥ १७
तत्रापश्याम वै सर्वे मधु पीतकमाक्षिकम् ।
मरुप्रपाते विषमे निविष्टं कुम्भसंमितम् ॥ १८
आशीविषै रक्ष्यमाणं कुबेरदयितं भृशम् ।
यत्प्राप्य पुरुषो मर्त्योऽप्यमरत्वं नियच्छति ॥१९
अचक्षुर्लभते चक्षुर्वृद्धो भवति वै युवा ।
इति ते कथयन्तिस्म ब्राह्मणा जम्भसाधकाः ॥२०
ततः किरातास्तदृष्ट्वा प्रार्थयन्तो महीपते ।
विनेशुर्विषमे तस्मिन्ससर्पे गिरिगह्वरे ॥ २१
तथैव तव पुत्रोऽयं पृथिवीमेक इच्छति ।
मधु पश्यति संमोहात्प्रपातं नानुपश्यति ॥ २२
दुर्योधनो योद्धुमनाः समरे सव्यसाचिना ।
न च पश्यामि तेजोऽस्य विक्रमं वा तथाविधम् २३
एकेन रथमास्थाय पृथिवी येन निर्जिता ।
भीष्मद्रोणप्रभृतयः सन्त्रस्ताः साधुयायिनः ॥ २४
विराटनगरे भग्नाः किं तत्र तव दृश्यताम् ।
प्रतीक्षमाणो यो वीरः क्षमते वीक्षितं तव ॥ २५
द्रुपदो मत्स्यराजश्च सङ्क्रुद्धश्च धनञ्जयः ।
न शेषयेयुः समरे वायुयुक्ता इवाग्नयः ॥ २६

---

विद्याजम्भकवार्तिकाः । विद्या मन्त्रयन्त्रादिरूपा । जम्भक औ- [illegible] परिष्कृतम् ॥ १७ ॥ चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

अङ्के कुरुष्व राजानं धृतराष्ट्र युधिष्ठिरम्। युध्यतोर्हि द्वयोर्युद्धे नैकान्तेन भवेज्जयः ॥ २७

॥ इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

धृतराष्ट्रेण दुर्योधनंप्रति अर्जुनस्य श्रीकृष्णपरमप्रेमास्पदतया दुर्जयत्वाभिधानपूर्वकं पाण्डवैः सह सन्धिविधानम् ॥ १ ॥

धृतराष्ट्र उवाच।
दुर्योधन विजानीहि यत्त्वां वक्ष्यामि पुत्रक।
उत्पथं मन्यसे मार्गमनभिज्ञ इवाध्वगः ॥ १
पञ्चानां पाण्डुपुत्राणां यत्तेजः प्रजिहीर्षसि।
पञ्चानामिव भूतानां महतां लोकधारिणाम्॥ २
युधिष्ठिरं हि कौन्तेयं परं धर्ममिहास्थितम्।
परां गतिमसंप्रेत्य न त्वं जेतुमिहार्हसि ॥ ३
भीमसेनं च कौन्तेयं यस्य नास्ति समो बले।
रणान्तकं तर्जयसे महावातमिव द्रुमः ॥ ४
सर्वशस्त्रभृतां श्रेष्ठं मेरुं शिखरिणामिव।
युधि गाण्डीवधन्वानं को नु युध्येत बुद्धिमान् ५
धृष्टद्युम्नश्च पाञ्चाल्यः कमिवाद्य न शातयेत्।
शत्रुमध्ये शरान्मुञ्चन्देवराडशनीमिव ॥ ६
सात्यकिश्चापि दुर्धर्षः संमतोऽन्धकवृष्णिषु।
ध्वंसयिष्यति ते सेनां पाण्डवेयहिते रतः ॥ ७
यः पुनः प्रतिमानेन त्रींल्लोकानतिरिच्यते।
तं कृष्णं पुण्डरीकाक्षं को नु युद्ध्येत बुद्धिमान् ८
एकतो ह्यस्य दाराश्च ज्ञातयश्च सबान्धवाः।
आत्मा च पृथिवी चेयमेकतश्च धनञ्जयः ॥ ९
वासुदेवोऽपि दुर्धर्षो यतात्मा यत्र पाण्डवः।
अविषह्यं पृथिव्यापि तद्बलं यत्र केशवः ॥ १०
तिष्ठ तात सतां वाक्ये सुहृदामर्थवादिनाम्।
वृद्धं शान्तनवं भीष्मं तितिक्षस्व पितामहम्॥ ११
मां च ब्रुवाणं शुश्रूष कुरूणामर्थदर्शिनम्।
द्रोणं कृपं विकर्णं च महाराजं च बाह्लिकम्॥१२
एते ह्यपि यथैवाहं मन्तुमर्हसि तांस्तथा।
सर्वे धर्मविदो ह्येते तुल्यस्नेहाश्च भारत ॥ १३
यत्तद्विराटनगरे सह भ्रातृभिरग्रतः।
उत्सृज्य गाः सुसन्त्रस्तं बलं ते समशीर्यत ॥ १४
यच्चैव नगरे तस्मिञ्श्रूयते महदद्भुतम्।
एकस्य च बहूनां च पर्याप्तं तन्निदर्शनम् ॥ १५
अर्जुनस्तत्तथाकार्षीत्किं पुनः सर्व एव ते।
स भ्रातॄनभिजानीहि वृत्त्या तं प्रतिपादय॥ १६

॥ इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

## षट्षष्टितमोऽध्यायः ॥ ६६ ॥

दुर्योधनेन धृतराष्ट्रवचनानभिनन्दने राज्ञां निर्गमनम् ॥ १ ॥ धृतराष्ट्रेण स्वपरसेनयोः सारासारकथनचोदितेन सञ्जयेन व्यासगान्धारीसन्निधौ कथनकथनम् ॥ २ ॥ श्रीव्यासेन सञ्जयंप्रति धृतराष्ट्रप्रश्नस्योत्तरदानाभ्यनुज्ञानम् ॥ ३ ॥

वैशंपायन उवाच।
दुर्योधने धार्तराष्ट्रे तद्वचो नाभिनन्दति।
तूष्णींभूतेषु सर्वेषु समुत्तस्थुर्नरर्षभाः ॥ १
उत्थितेषु महाराज पृथिव्यां सर्वराजसु।
रहिते सञ्जयं राजा परिप्रष्टुं प्रचक्रमे ॥ २
आशंसमानो विजयं तेषां पुत्रवशानुगः।

उत्पथं अमार्गमेव मार्गं मन्यसे ॥ १ ॥ न शातयेत् न छिन्द्यात् ॥ ६ ॥ प्रतिमानेन तुल्यत्वेन ॥ ८ ॥ भीष्मं तितिक्षस्व तद्वाक्यं गृहाणेत्यर्थः ॥ ११ ॥ वृत्त्या राज्यार्धदानेन। प्रतिपादय संभावय ॥ १६ ॥ पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

आत्मनश्च परेषां च पाण्डवानां च निश्चयम् ॥३
धृतराष्ट्र उवाच ।
गावल्गणे ब्रूहि नः सारफल्गु
स्वसेनायां यावदिहास्ति किंचित् ।
त्वं पाण्डवानां निपुणं वेत्थ सर्वं
किमेषां ज्यायः किमु तेषां कनीयः ॥ ४
त्वमेतयोः सारवित्सर्वदर्शी
धर्मार्थयोर्निपुणो निश्चयज्ञः ।
स मे पृष्टः सञ्जय ब्रूहि सर्वं
युध्यमानाः कतरेऽस्मिन्न सन्ति ॥ ५
सञ्जय उवाच ।
न त्वां ब्रूयां रहिते जातु किंचि-
दसूया हि त्वां प्रविशेत राजन् ।
आनयस्व पितरं महाव्रतं
गान्धारीं च महिषीमाजमीढ ॥ ६
तौ तेऽसूयां विनयेतां नरेन्द्र
धर्मज्ञौ तौ निपुणौ निश्चयज्ञौ ।
तयोस्तु त्वां सन्निधौ तद्वदेयं
कृत्स्नं मतं केशवपार्थयोर्यत् ॥ ७
वैशंपायन उवाच ।
इत्युक्तेन च गान्धारी व्यासश्चात्राजगामह ।
आनीतौ विदुरेणेह सभां शीघ्रं प्रवेशितौ ॥ ८
ततस्तन्मतमाज्ञाय सञ्जयस्यात्मजस्य च ।
अभ्युपेत्य महाप्राज्ञः कृष्णद्वैपायनोऽब्रवीत् ॥ ९
व्यास उवाच ।
संपृच्छते धृतराष्ट्राय सञ्जय
आचक्ष्व सर्वं यावदेषोऽनुयुङ्क्ते ।
सर्वं यावद्वेत्थ तस्मिन्यथाव-
द्याथातथ्यं वासुदेवेऽर्जुने च ॥ १०

॥ इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

## सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

**सञ्जयेन धृतराष्ट्रंप्रति सारभूतात्सर्वस्मादपि श्रीकृष्णस्य सारतरत्वकथनम् ॥ १ ॥**

सञ्जय उवाच ।
अर्जुनो वासुदेवश्च धन्विनौ परमार्थितौ ।
कामादन्यत्र संभूतौ सर्वभावाय संमितौ ॥ १
व्यामान्तरं समास्थाय यथामुक्तं मनस्विनः ।
चक्रं तद्वासुदेवस्य मायया वर्तते विभो ॥ २
सापह्नवं कौरवेषु पाण्डवानां सुसंमतम् ।
सारासारबलं ज्ञातुं तेजःपुञ्जावभासितम् ॥ ३
नरकं शम्बरं चैव कंसं चैद्यं च माधवः ।
जितवान्घोरसङ्काशान्क्रीडन्निव महाबलः ॥ ४
पृथिवीं चान्तरिक्षं च द्यां चैव पुरुषोत्तमः ।
मनसैव विशिष्टात्मा नयत्यात्मवशं वशी ॥ ५
भूयो भूयो हि यद्राजन्पृच्छसे पाण्डवान्प्रति ।
सारासारबलं ज्ञातुं तत्समासेन मे शृणु ॥ ६
एकतो वा जगत्कृत्स्नमेकतो वा जनार्दनः ।
सारतो जगतः कृत्स्नादतिरिक्तो जनार्दनः ॥ ७
भस्म कुर्याज्जगदिदं मनसैव जनार्दनः ।
न तु कृत्स्नं जगच्छक्तं किञ्चित्कर्तुं जनार्दने ॥८
यतः सत्यं यतो धर्मो यतो ह्रीरार्जवं यतः ।
ततो भवति गोविन्दो यतः कृष्णस्ततो जयः॥ ९
पृथिवीं चान्तरिक्षं च दिवं च पुरुषोत्तमः ।
विचेष्टयति भूतात्मा क्रीडन्निव जनार्दनः॥ १०
स कृत्वा पाण्डवान्सत्रं लोकं संमोहयन्निव ।

---

परेषां तटस्थानाम् ॥ ३ ॥ युध्यमाना न सन्ति उदासीना इत्यर्थः ॥५॥ पितरं व्यासम् ॥ ६ ॥ षट्षष्टितमोऽध्यायः ॥६६॥

व्यामान्तरं प्रसारितयोर्हस्तयोर्यावान्विस्तारः पञ्चहस्तमितः तावत् अन्तरं मध्यप्रमाणं यस्य तद्व्यामान्तरम् । यथामुक्तं यथा यथारूपं यावत्प्रमाणं चिन्तितं तावत्प्रमाणं भूत्वा यत् मुक्तं भवति । मायया दुर्लक्ष्यरूपेणेत्यर्थः ॥२॥ सापह्नवं ससंहारम् । अत एव पाण्डवानां सुसंमतम् ॥३॥ सत्रं व्याजम् । सत्रमाच्छादने यज्ञे सदादाने च कैतवे इति विश्वः ॥११॥ ईशन्नपि ईशानोपि। कीनाशः

अधर्मनिरतान्मूढान्दग्धुमिच्छति ते सुतान्॥ ११
कालचक्रं जगच्चक्रं युगचक्रं च केशवः ।
आत्मयोगेन भगवान्परिवर्तयतेऽनिशम् ॥ १२
कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च ।
ईष्टे हि भगवानेकः सत्यमेतद्ब्रवीमि ते ॥ १३
ईशन्नपि महायोगी सर्वस्य जगतो हरिः ।
कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः ॥ १४
तेन वञ्चयते लोकान्मायायोगेन केशवः ।
ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः ॥ १५

॥ इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

## अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

भगवद्वेदनसाधनं पृष्टेन सञ्जयेन धृतराष्ट्रंप्रति तत्कथनम् ॥ १ ॥ श्रीव्यासेन धृतराष्ट्रंप्रति सञ्जयाद्भगवद्वेदनाभ्यनुज्ञा ॥ २ ॥

धृतराष्ट्र उवाच ।
कथं त्वं माधवं वेत्थ सर्वलोकमहेश्वरम् ।
कथमेनं न वेदाहं तन्ममाचक्ष्व सञ्जय ॥ १
सञ्जय उवाच ।
शृणु राजन्न ते विद्या मम विद्या न हीयते ।
विद्याहीनस्तमोध्वस्तो नाभिजानाति केशवम् २
विद्यया तात जानामि त्रियुगं मधुसूदनम् ।
कर्तारमकृतं देवं भूतानां प्रभवाप्ययम् ॥ ३
धृतराष्ट्र उवाच ।
गावल्गणेऽत्र का भक्तिर्या ते नित्या जनार्दने ।
यया त्वमभिजानासि त्रियुगं मधुसूदनम् ॥ ४
सञ्जय उवाच ।
मायां न सेवे भद्रं ते न वृथाधर्ममाचरे ।
शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्॥५
धृतराष्ट्र उवाच ।
दुर्योधन हृषीकेशं प्रपद्यस्व जनार्दनम् ।
आप्तो नः सञ्जयस्तात शरणं गच्छ केशवम्॥६
दुर्योधन उवाच ।
भगवान्देवकीपुत्रो लोकांश्चेन्निहनिष्यति ।
प्रवदन्नर्जुने सख्यं नाहं गच्छेऽद्य केशवम् ॥ ७
धृतराष्ट्र उवाच ।
अवाग्गान्धारि पुत्रस्ते गच्छत्येष सुदुर्मतिः ।
ईर्षुर्दुरात्मा मानी च श्रेयसां वचनातिगः ॥ ८
गान्धार्युवाच ।
ऐश्वर्यकाम दुष्टात्मन्वृद्धानां शासनातिग ।
ऐश्वर्यजीविते हित्वा पितरं मां च बालिश ॥ ९
वर्धयन्दुर्हृदां प्रीतिं मां च शोकेन वर्धयन् ।
निहतो भीमसेनेन स्मर्तासि वचनं पितुः ॥ १०
व्यास उवाच ।
प्रियोऽसि राजन्कृष्णस्य धृतराष्ट्र निबोध मे ।
यस्य ते सञ्जयो दूतो यस्त्वां श्रेयसि योक्ष्यते॥११
जानात्येष हृषीकेशं पुराणं यच्च वै परम् ।
शुश्रूषमाणमैकाग्र्यं मोक्ष्यते महतो भयात् ॥१२
वैचित्रवीर्य पुरुषाः क्रोधहर्षसमावृताः ।
सिता बहुविधैः पाशैर्ये न तुष्टाः स्वकैर्धनैः॥१३
यमस्य वशमायान्ति काममूढाः पुनःपुनः ।
अन्धनेत्रा यथैवान्धा नीयमानाः स्वकर्मभिः॥१४
एष एकायनः पन्था येन यान्ति मनीषिणः ।
तं दृष्ट्वा मृत्युमत्येति महांस्तत्र न सज्जति ॥ १५
धृतराष्ट्र उवाच ।
अङ्ग सञ्जय मे शंस पन्थानमकुतोभयम् ।
येन गत्वा हृषीकेशं प्राप्नुयां सिद्धिमुत्तमाम्॥१६

---

कर्षकः ॥ १४ ॥ सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

भक्तिः आराध्यत्वेन ज्ञानं तच्च कीदृशम्॥४॥वृथाधर्मं भगवदर्पणं विना न चरामि । शुद्धभावं मनसः कामक्रोधादिराहित्येन नैर्मल्यम् ॥५॥ ऐकाग्र्यं शुश्रूषमाणं सेवमानं त्वां मोक्ष्यते मोचयिष्यति ॥ १२ ॥ सिताः बद्धाः । पाशैः कामादिभिः ॥ १३ ॥ अन्धनेत्रा अन्धश्चासौ नेता च तेन ॥ १४ ॥

सञ्जय उवाच ।
नाकृतात्मा कृतात्मानं जातु विद्याज्जनार्दनम् ।
आत्मनस्तु क्रियोपायो नान्यत्रेन्द्रियनिग्रहात्१७
इन्द्रियाणामुदीर्णानां कामत्यागोऽप्रमादतः ।
अप्रमादोऽविहिंसा च ज्ञानयोनिरसंशयम्॥ १८
इन्द्रियाणां यमे यत्तो भव राजन्नतन्द्रितः ।
बुद्धिश्च ते मा च्यवतु नियच्छैनां यतस्ततः॥ १९
एतज्ज्ञानं विदुर्विप्रा ध्रुवमिन्द्रियधारणम् ।
एतज्ज्ञानं च पन्थाश्च येन यान्ति मनीषिणः २०
अप्राप्यः केशवो राजन्निन्द्रियैरजितैर्नृभिः ।
आगमाधिगमाद्योगाद्वशी तत्त्वे प्रसीदति ॥ २१

॥ इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

## एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

सञ्जयेन धृतराष्ट्रंप्रति वासुदेवादिभगवन्नामनिर्वचनम् ॥ १ ॥ तथा सन्ध्यर्थं श्रीकृष्णागमनकथनम् ॥ २ ॥

धृतराष्ट्र उवाच ।
भूयो मे पुण्डरीकाक्षं सञ्जयाचक्ष्व पृच्छतः ।
नामकर्मार्थवित्तात प्राप्नुयां पुरुषोत्तमम् ॥ १
सञ्जय उवाच ।
श्रुतं मे वासुदेवस्य नामनिर्वचनं शुभम् ।
यावत्तत्राभिजानेऽहमप्रमेयो हि केशवः ॥ २
वसनात्सर्वभूतानां वसुत्वाद्देवयोनितः ।
वासुदेवस्ततो वेद्यो बृहत्त्वाद्विष्णुरुच्यते ॥ ३
मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवम् ।
सर्वतत्त्वलयाच्चैव मधुहा मधुसूदनः ॥ ४
कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
विष्णुस्तद्भावयोगाच्च कृष्णो भवति सात्वतः॥५
पुण्डरीकं परं धाम नित्यमक्षयमव्ययम् ।
तद्भावात्पुण्डरीकाक्षो दस्युत्रासाज्जनार्दनः ॥ ६
यतः सत्त्वं न च्यवते यच्च सत्वान्न हीयते ।
सात्वतः सात्वतस्तस्मादार्षभाद्वृषभेक्षणः ॥ ७
न जायते जनित्राऽयमजस्तस्मादनीकजित् ।
देवानां स्वप्रकाशत्वाद्दमाद्दामोदरो विभुः ॥ ८
हर्षात्सुखात्सुखैश्वर्याद्धृषीकेशत्वमश्नुते ।
बाहुभ्यां रोदसी बिभ्रन्महाबाहुरिति स्मृतः ॥९
अधो न क्षीयते जातु यस्मात्तस्मादधोक्षजः ।
नराणामयनाच्चापि ततो नारायणः स्मृतः॥ १०
पूरणात्सदनाच्चापि ततोऽसौपुरुषोत्तमः ।
असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात् ।

---

आत्मनः स्वस्य इन्द्रियनिग्रहादन्यत्र इन्द्रियनिग्रहंविना क्रिया यागादिरूपा उपायः प्राप्त्युपायो नास्ति ॥ १७ ॥ योगात् चित्तवृत्तिनिरोधात् ।वशी ईश्वरः। तत्त्वे स्वयाथात्म्ये विषये । प्रसीदति ज्ञानदानेन अनुगृह्णाति ॥ २१ ॥ अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

यावदभिजाने तावत् । वदामीति शेषः। वस्तुतस्तु सः अप्रमेयः ॥ २ ॥ वसत्यस्मिन् भुवनमिति वासुः दीर्घश्छान्दसः । स चासौ देवश्च वासुदेवः । बृहत्त्वाद्व्यापकत्वात् वेवेष्टि व्याप्नोति सर्वमिति विष्णुः। वृषत्वाद्विष्णुरुच्यते इति ख. पाठः। वृषत्वात् अभीष्टसेचकत्वात् इति रत्नगर्भः॥ ३ ॥ मौनं मुनेः कर्म मननं। मौनं च ध्यानं च ताभ्यां विषयतया युक्तो माधवः । सर्वतत्त्वानि पृथिव्यादयो विषयाः । तेच सुखसाधनतया मधुशब्देनोक्ताः । तेषां लयात् संहर्तृत्वात् मधुहा मधुसूदनश्चेति नामद्वयम् ॥ ४ ॥ कृषिरितिशब्दो भूवाचकः कृष्यते सस्यार्थमिति व्युत्पत्त्या । भूमिलोकस्थप्राणिसुखस्य यो भाव उत्पादनं तत्कर्तृत्वात्कृष्णो भवति ॥ ५ ॥ पुण्डरीकं हृदयकमलं धाम वासस्थानं तत्र सन्नपि अक्षो न क्षीयते हन्यते वेति पुण्डरीकाक्षः । तथाच श्रुतिर्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत इति हृत्पद्म । दोषैर्जरानाशादिभिः परमात्मनोऽस्पृष्टत्वमाह । दस्युत्रासात् जनं दस्युजनं अर्दयति पीडयतीति जनार्दन इत्यर्थः ॥ ६ ॥ सत्त्वं बलं । आर्षं वेदस्तेन भातीत्यार्षभ औपनिषदः पुरुषः । उपनिषद्वेद्यत्वाद्योगात् वृषभेक्षणः। तथाचायं योगः वृषं धर्मं भासयतीति वृषभो वेदस्तदेव ईक्षणं चक्षुरिव ज्ञापकं यस्य सः वृषभेक्षण इति ॥ ७ ॥ जनित्रा पित्रा न जायत इत्यजः । अनीकजित्सेनाजित् कृष्णः। देवानां स्वप्रकाशत्वात् । ऋगतावित्यस्मादुत्पूर्वात् अप् । उत् उत्कर्षेण ऋच्छति प्रकाशत इति उदरः। दमोस्यास्तीति दामः दामश्चासावुदरश्चेति दामोदरः ॥ ८ ॥ हर्षात हृषिः सुखात्कं सुखैश्वर्यादीशः । महीति च्छान्दसं रोदस्योर्नाम। मह्यौ बाह्वोर्यस्य स तथा । ईकाराकारश्छान्दसः ॥ ९ ॥ जातु शब्दार्थे जकारः ॥ १० ॥ पुरयतीति पुरुः । सीदन्त्यस्मिन्निति स तस्मात्पुरुषः स चासावुत्तमश्च पुरुषोत्तमः । असतः कारणस्

सर्वस्य च सदा ज्ञानात्सर्वमेतं प्रचक्षते ॥ ११
सत्ये प्रतिष्ठितः कृष्णः सत्यमत्र प्रतिष्ठितम् ।
सत्यात्सत्यं तु गोविन्दस्तस्मात्सत्योपि नामतः १२
विष्णुर्विक्रमणाद्देवो जयनाज्जिष्णुरुच्यते ।
शाश्वतत्वादनन्तश्च गोविन्दो वेदनाद्गवाम् ॥ १३
अतत्त्वं कुरुते तत्त्वं तेन मोहयते प्रजाः ॥ १४
एवंविधो धर्मनित्यो भगवान्मधुसूदनः ।
आगन्ता हि महाबाहुरानृशंस्यार्थमच्युतः ॥ १५

॥ इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि ऊनसप्ततितमोऽध्यायः ॥ ६९ ॥

## सप्ततितमोऽध्यायः ॥ ७० ॥

श्रीकृष्णागमनश्रवणहृष्टेन धृतराष्ट्रेण चक्षुष्मत्प्रशंसनपूर्वकं श्रीकृष्णगुणानुवर्णनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
चक्षुष्मतां वै स्पृहयामि सञ्जय
द्रक्ष्यन्ति ये वासुदेवं समीपे ।
विभ्राजमानं वपुषा परेण
प्रकाशयन्तं प्रदिशो दिशश्च ॥ १
ईरयन्तं भारतीं भारताना-
मभ्यर्चनीयां शङ्करीं सृञ्जयानाम् ।
बुभूषद्भिर्ग्रहणीयामनिन्द्यां
परासूनामग्रहणीयरूपाम् ॥ २
समुद्यन्तं सात्वतमेकवीरं
प्रणेतारमृषभं यादवानाम् ।
निहन्तारं क्षोभणं शात्रवाणां
मुष्णन्तं च द्विषतां वै यशांसि ॥ ३
द्रष्टारो हि कुरवस्तं समेता
महात्मानं शत्रुहणं वरेण्यम् ।
ब्रुवन्तं वाचमनृशंसरूपां
वृष्णिश्रेष्ठं मोहयन्तं मदीयान् ॥ ४
ऋषिं सनातनतमं विपश्चितं
वाचःसमुद्रं कलशं यतीनाम् ।
अरिष्टनेमिं गरुडं सुपर्णं
हरिं प्रजानां भुवनस्य धाम ॥ ५
सहस्रशीर्षं पुरुषं पुराण-
मनादिमध्यान्तमनन्तकीर्तिम् ।
शुक्रस्य धातारमजं च नित्यं
परं परेषां शरणं प्रपद्ये ॥ ६
त्रैलोक्यनिर्माणकरं जनित्रं
देवासुराणामथ नागरक्षसाम् ।
नराधिपानां विदुषां प्रधान-
मिन्द्रानुजं तं शरणं प्रपद्ये ॥ ७

॥ इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥

## ॥ समाप्तं च यानसन्धिपर्व ॥

---

सतः कार्यस्य प्रभवाप्ययात् उत्पत्तिप्रलयस्थानत्वात् सर्वशब्दस्तत्प्रभवाप्ययहेतावुपचारात्प्रवर्तते ॥ ११ ॥ सत्ये धर्मे ॥ १२ ॥ विशेषेण क्रमणात् व्यापनात् । एवं जयतीति जिष्णुः शाश्वतत्वात् शश्वद्भवत्वात् । गवामिन्द्रियाणां वेदनात् प्रकाशात् गोविन्दः ॥ १३ ॥ धर्मे नित्यं सन्निधानात् धर्मनित्यः । आगन्ता आगमिष्यति । आनृशंस्यमहिंसा कुरुपाण्डवयोः तदर्थम् ॥ १५ ॥ ऊनसप्ततितमोऽध्यायः ॥ ६९ ॥

चक्षुष्मतां भाग्याय स्पृहयामि ॥ १ ॥ अरिष्टः अहिंसितः नेमिः पादो यस्य सः अरिष्टनेमिः ॥ ५ ॥ निर्माणं रचना । जनित्रं जनयितारम् ॥ ७ ॥ सप्ततितमोऽध्यायः ॥ ७० ॥

# (अथ भगवद्यानपर्व ॥ ६ ॥)

## एकसप्ततितमोऽध्यायः ॥ ७१ ॥

युधिष्ठिरेण श्रीकृष्णंप्रति सन्ध्यर्थं हास्तिनपुरगमनप्रार्थनासूचकवचनोपन्यासः ॥ १ ॥ श्रीकृष्णेन तत्र स्वस्य गमनकथनम् ॥ २ ॥

'जनमेजय उवाच ।
प्रयाते सञ्जये साधौ कौरवान्प्रति वै तदा ।
किं चक्रुः पाण्डवास्तत्र मम पूर्वपितामहाः ॥ १
एतत्सर्वं द्विजश्रेष्ठ विस्तरं मम सत्तम ।
कथयस्व प्रयत्नेन श्रोतुमिच्छामि पण्डित ॥ २
वैशंपायन उवाच ।
सञ्जये प्रतियाते तु धर्मराजो युधिष्ठिरः ।
अर्जुनं भीमसेनं च माद्रीपुत्रौ च भारत ॥ ३
विराटं द्रुपदं चैव केकयानां महारथान् ।
अब्रवीदुपसङ्गम्य शङ्खचक्रगदाधरम् ।
अभियाचामहे गत्वा प्रयातुं कुरुसंसदम् ॥ ४
यथा भीष्मेण द्रोणेन बाह्लीकेन च धीमता ।
अन्यैश्च कुरुभिः सार्धं न युध्येमहि संयुगे ॥ ५
एष नः प्रथमः कल्प एतन्निश्रेय उत्तमम् ।
एवमुक्ताः सुमनसस्तेऽभिजग्मुर्जनार्दनम् ॥ ६
पाण्डवैः सह राजानो मरुत्वन्त इवामराः ।
तदा च दुःसहाः सर्वे सदस्यास्ते नरर्षभाः ॥ ७
जनार्दनं समासाद्य कुन्तीपुत्रो युधिष्ठिरः ।
अब्रवीत्परवीरघ्नं दाशार्हं पाण्डुनन्दनः ॥' ८
अयं स कालः संप्राप्तो मित्राणां मित्रवत्सल ।
न च त्वदन्यं पश्यामि यो न आपत्सु तारयेत् ९
त्वां हि माधवमाश्रित्य निर्भया मोघदर्पितम् ।
धार्तराष्ट्रं सहामात्यं स्वयं समनुयुङ्क्ष्महे ॥ १०
यथा हि सर्वास्वापत्सु पासि वृष्णीनरिन्दम ।
तथा ते पाण्डवा रक्ष्याः पाह्यस्मान्महतो भयात् ११
श्रीभगवानुवाच ।
अयमस्मि महाबाहो ब्रूहि यत्ते विवक्षितम् ।
करिष्यामि हि तत्सर्वं यत्त्वं वक्ष्यसि भारत ॥ १२
युधिष्ठिर उवाच ।
श्रुतं ते धृतराष्ट्रस्य सपुत्रस्य चिकीर्षितम् ।
एतद्धि सकलं कृष्ण सञ्जयो मां यदब्रवीत् ॥ १३
'मृदुपूर्वं साममिश्रं सममुग्रं च माधव ।
न कृतं न्यायमास्थाय गर्हिताश्च ततो वयम् ॥' १४
तन्मतं धृतराष्ट्रस्य सोऽस्यात्मा विवृतान्तरः ।
यथोक्तं दूत आचष्टे वध्यः स्यादन्यथा ब्रुवन् १५
अप्रदानेन राज्यस्य शान्तिमस्मासु मार्गति ।
लुब्धः पापेन मनसा चरन्नसममात्मनः ॥ १६
यत्तद्द्वादशवर्षाणि वनेषु ह्युषिता वयम् ।
छद्मना शरदं चैकां धृतराष्ट्रस्य शासनात् ॥ १७
स्थाता नः समये तस्मिन्धृतराष्ट्र इति प्रभो ।
नाहास्म समयं कृष्ण तद्धि नो ब्राह्मणा विदुः ॥
गृद्धो राजा धृतराष्ट्रः स्वधर्मं नानुपश्यति ।
वश्यत्वात्पुत्रगृद्धित्वान्मन्दस्यान्वेति शासनं १९
सुयोधनमते तिष्ठन्राजाऽस्मासु जनार्दन ।
मिथ्याचरति लुब्धः संश्चरन्हि प्रियमात्मनः २०
इतो दुःखतरं किं नु यदहं मातरं ततः ।
संविधातुं न शक्नोमि मित्राणां वा जनार्दन २१
काशिभिश्चेदिपाञ्चालैर्मत्स्यैश्च मधुसूदन ।
भवता चैव नाथेन पञ्च ग्रामा वृता मया ॥ २२
अविस्थलं वृकस्थलं माकन्दी वारणावतम् ।
अवसानं च गोविन्द कंचिदेवात्र पञ्चमम् ॥ २३
पञ्च नस्तात दीयन्तां ग्रामा वा नगराणि वा ।

---

अनुयुङ्क्ष्महे प्रार्थयामहे ॥ १० ॥ विवृतान्तरः प्रकाशितभावः ॥ १५ ॥ छद्मना अज्ञातचर्यया ॥ १७ ॥ स्थाता स्थास्यति। नः अस्माकम्। तस्मिन् चतुर्दशे वर्षे स्वं राज्यं गृह्णीतेत्यस्मिन्। न अहास्म न त्यक्तवन्तो वयम् ॥ १८ ॥ मातरं संविधातुं सम्यक् पोषयितुम् । मित्राणां कर्मणि षष्ठी ॥ २१ ॥ अवसीयते संस्थीयतेऽस्मिन्नित्यवसानम् यावज्जीवकं वासस्थानम् ॥२३॥ नः अस्माकं कृते भरताः भरतवंश्या भीष्मादयः

वसेम सहिता येषु मा च नो भरता नशन् ॥२४
न च तानपि दुष्टात्मा धार्तराष्ट्रोऽनुमन्यते ।
स्वाम्यमात्मनि मत्वाऽसावतो दुःखतरं नु किं २५
कुले जातस्य वृद्धस्य परवित्तेषु गृद्ध्यतः ।
लोभः प्रज्ञानमाहन्ति प्रज्ञा हन्ति हता ह्रियं २६
ह्रीर्हता बाधते धर्मं धर्मो हन्ति हतः श्रियम् ।
श्रीर्हता पुरुषं हन्ति पुरुषस्याधनं वधः ॥ २७
अधनाद्धि निवर्तन्ते ज्ञातयः सुहृदो द्विजाः ।
अपुष्पादफलाद्वृक्षाद्यथा कृष्ण पतत्रिणः ॥ २८
एतच्च मरणं तात उन्मत्तपतितादिव ।
ज्ञातयो विनिवर्तन्ते प्रेतसत्वादिवासवः ॥ २९
नातः पापीयसीं कांचिदवस्थां शम्बरोऽब्रवीत् ।
यत्र नैवाऽद्य न प्रातर्भोजनं प्रतिदृश्यते ॥ ३०
धनमाहुः परं धर्मं धने सर्वं प्रतिष्ठितम् ।
जीवन्ति धनिनो लोके मृता ये त्वधना नराः॥
ये धनादपकर्षन्ति नरं स्वबलमास्थिताः ।
ते धर्ममर्थं कामं च प्रमथ्नन्ति नरं च तम् ॥३२
एतामवस्थां प्राप्यैके मरणं वव्रिरे जनाः ।
ग्रामायैके वनायैके नाशायैके प्रवव्रजुः ॥ ३३
उन्मादमेके पुष्यन्ति यान्त्यन्ये द्विषतां वशम् ।
दास्यमेके च गच्छन्ति परेषामर्थहेतुना ॥ ३४
आपदेवास्य मरणात्पुरुषस्य गरीयसी ।
श्रियो विनाशस्तद्ध्यस्य निमित्तं धर्मकामयोः ३५
यदस्य धर्म्यं मरणं शाश्वतं लोकवर्त्मवत् ।
समन्तात्सर्वभूतानां न तदत्येति कश्चन ॥ ३६
न तथा बाध्यते कृष्ण प्रकृत्या निर्धनो जनः ।
यथा भद्रां श्रियं प्राप्य तया हीनः सुखैधितः॥
स तदाऽऽत्मापराधेन संप्राप्तो व्यसनं महत् ।
सेन्द्रान्गर्हयते देवान्नात्मानं च कथंचन ॥ ३८
न चास्य सर्वशास्त्राणि प्रभवन्ति निबर्हणे ।
सोऽभिक्रुध्यति भृत्यानां सुहृदश्चाभ्यसूयति ३९
तत्तदा मन्युरेवैति स भूयः संप्रमुह्यति ।
स मोहवशमापन्नः क्रूरं कर्म निषेवते ॥ ४०
पापकर्मतया चैव सङ्करं तेन पुष्यति ।
सङ्करो नरकायैव सा काष्ठा पापकर्मणाम् ॥ ४१
न चेत्प्रबुध्यते कृष्ण नरकायैव गच्छति ।
तस्य प्रबोधः प्रज्ञैव प्रज्ञाचक्षुस्तरिष्यति ॥ ४२
प्रज्ञालाभे हि पुरुषः शास्त्राण्येवान्ववेक्षते ।
शास्त्रनिष्ठः पुनर्धर्मं तस्य ह्रीरङ्गमुत्तमम् ॥ ४३
ह्रीमान्हि पापं प्रद्वेष्टि तस्य श्रीरभिवर्धते ।
श्रीमान्स यावद्भवति तावद्भवति पूरुषः ॥ ४४
धर्मनित्यः प्रशान्तात्मा कार्ययोगवहः सदा ।
नाधर्मे कुरुते बुद्धिं न च पापे प्रवर्तते ॥ ४५
अह्रीको वा विमूढो वा नैव स्त्री न पुनः पुमान्।
नास्याधिकारो धर्मेऽस्ति यथा शूद्रस्तथैव सः ४६
ह्रीमानवति देवांश्च पितॄनात्मानमेव च ।
तेनामृतत्वं व्रजति सा काष्ठा पुण्यकर्मणाम् ४७
तदिदं मयि ते दृष्टं प्रत्यक्षं मधुसूदन ।
यथा राज्यात्परिभ्रष्टो वसामि वसतीरिमाः ४८
ते वयं न श्रियं हातुमलं न्यायेन केनचित् ।
अत्र नो यतमानानां वधश्चेदपि साधु तत्॥४९
तत्र नः प्रथमः कल्पो यद्वयं ते च माधव ।
प्रशान्ताः समभूताश्च श्रियं तामश्नुवीमहि ॥ ५०
तत्रैषा परमा काष्ठा रौद्रकर्मक्षयोदया ।
यद्वयं कौरवान्हत्वा तानि राष्ट्राण्यवाप्नुमः ॥५१
ये पुनः स्युरसंबद्धा अनार्याः कृष्ण शत्रवः ।
तेषामप्यवधः कार्यः किंपुनर्ये स्युरीदृशाः ॥ ५२
ज्ञातयश्चैव भूयिष्ठाः सहाया गुरवश्च नः ।
तेषां वधोऽतिपापीयान्किं नु युद्धेऽस्ति शोभनम्
पापः क्षत्रियधर्मोऽयं वयं च क्षत्रबन्धवः ।
स नः स्वधर्मोऽधर्मो वा वृत्तिरन्या विगर्हिता ५४
शूद्रः करोति शुश्रूषां वैश्या वै पण्यजीविकाः ।
वयं वधेन जीवामः कपालं ब्राह्मणैर्वृतम् ॥ ५५
क्षत्रियः क्षत्रियं हन्ति मत्स्यो मत्स्येन जीवति ।

मानशन् मानश्यन्तु ॥ २४ ॥ द्विजाः अर्थिनः ॥ २८ ॥ प्रेतसत्वात् प्रगतबुद्धेर्मृतादित्यर्थः ॥ २९ ॥ धर्मं धर्मकारणम् । सर्वं यज्ञदानादि ॥ ३१ ॥ आपत्पदार्थमाह श्रियो विनाश इति । तद्धि श्रीर्हि ॥ ३५ ॥ तत्तदा सर्वदेत्यर्थः ॥ ४० ॥ इदं ह्रीमत्त्वं । ते त्वया ॥ ४८ ॥ कपालं भिक्षापात्रम् ॥ ५५ ॥

श्वा श्वानं हन्ति दाशार्ह पश्य धर्मो यथागतः॥५६
युद्धे कृष्ण कलिर्नित्यं प्राणाः सीदन्ति संयुगे।
बलं तु नीतिमाधाय युध्ये जयपराजयौ ॥ ५७
नात्मच्छन्देन भूतानां जीवितं मरणं तथा।
नाप्यकाले सुखं प्राप्यं दुःखं वाऽपि यदूत्तम॥५८
एको ह्यपि बहून्हन्ति घ्नन्त्येकं बहवोऽप्युत।
शूरं कापुरुषो हन्ति अयशस्वी यशस्विनम् ॥५९
जयो नैवोभयोर्दृष्टो नोभयोश्च पराजयः।
तथैवापचयो दृष्टो व्यपयाने क्षयव्ययौ ॥ ६०
सर्वथा वृजिनं युद्धं को घ्नन्न प्रतिहन्यते।
हतस्य च हृषीकेश समौ जयपराजयौ ॥ ६१
पराजयश्च मरणान्मन्ये नैव विशिष्यते।
यस्य स्याद्विजयः कृष्ण तस्याप्यपचयो ध्रुवम् ॥६२
अन्ततो दयितं घ्नन्ति केचिदप्यपरे जनाः।
तस्याङ्गबलहीनस्य पुत्रान्भ्रातॄनपश्यतः ॥ ६३
निर्वेदो जीविते कृष्ण सर्वतश्चोपजायते।
ये ह्येव धीरा ह्रीमन्त आर्याः करुणवेदिनः॥६४
त एव युद्धे हन्यन्ते यवीयान्मुच्यते जनः।
हत्वाऽप्यनुशयो नित्यं परानपि जनार्दन ॥६५
अनुबद्धश्च पापोऽत्र शेषश्चाप्यवशिष्यते।
शेषो हि बलमासाद्य न शेषमनुशेषयेत् ॥ ६६
सर्वोच्छेदे च यतते वैरस्यान्तविधित्सया।
जयो वैरं प्रसृजति दुःखमास्ते पराजितः ॥ ६७
सुखं प्रशान्तः स्वपिति हित्वा जयपराजयौ।
जातवैरश्च पुरुषो दुःखं स्वपिति नित्यदा ॥ ६८
अनिर्वृत्तेन मनसा ससर्प इव वेश्मनि।
उत्सादयति यः सर्वं यशसा स विमुच्यते ॥६९
अकीर्तिं सर्वभूतेषु शाश्वतीं स नियच्छति।
न हि वैराणि शाम्यन्ति दीर्घकालधृतान्यपि ७०
आख्यातारश्च विद्यन्ते पुमांश्चेद्विद्यते कुले।
न चापि वैरं वैरेण केशव व्युपशाम्यति ॥ ७१
हविषाऽग्निर्यथा कृष्ण भूय एवाभिवर्धते।
अतोऽन्यथा नास्ति शान्तिर्नित्यमन्तरमन्ततः॥७२
अन्तरं लिप्समानानामयं दोषो निरन्तरः।
पौरुषे यो हि बलवानाधिर्हृदयबाधनः।
तस्य त्यागेन वा शान्तिर्मरणेनापि वा भवेत्॥७३
अथवा मूलघातेन द्विषतां मधुसूदन।
फलनिर्वृत्तिरिद्धा स्यात्तन्नृशंसतरं भवेत् ॥ ७४
या तु त्यागेन शान्तिः स्यात्तदृते वध एव सः।
संशयाच्च समुच्छेदाद्विषतामात्मनस्तथा ॥ ७५
न च त्यक्तुं तदिच्छामो न चेच्छामः कुलक्षयम्।
अत्र या प्रणिपातेन शान्तिः सैव गरीयसी ॥७६
सर्वथा यतमानानामयुद्धमभिकाङ्क्षताम्।
सान्त्वे प्रतिहते युद्धं प्रसिद्धं नापराक्रमः ॥ ७७
प्रतिघातेन सान्त्वस्य दारुणं संप्रवर्तते।
तच्छुनामिव संपाते पण्डितैरुपलक्षितम् ॥ ७८
लाङ्गूलचालनं क्ष्वेडा प्रतिवाचो विवर्तनम्।
दन्तदर्शनमारावस्ततो युद्धं प्रवर्तते ॥ ७९
तत्र यो बलवान्कृष्ण जित्वा सोत्ति तदामिषम्।
एवमेव मनुष्येषु विशेषो नास्ति कश्चन ॥ ८०
सर्वथा त्वेतदुचितं दुर्बलेषु बलीयसाम्।
अनादरो विरोधश्च प्रणिपाती हि दुर्बलः ॥ ८१
पिता राजा च वृद्धश्च सर्वथा मानमर्हति।
तस्मान्मान्यश्च पूज्यश्च धृतराष्ट्रो जनार्दन ॥ ८२
पुत्रस्नेहश्च बलवान्धृतराष्ट्रस्य माधव।
स पुत्रवशमापन्नः प्रणिपातं प्रहास्यति ॥ ८३
तत्र किं मन्यसे कृष्ण प्राप्तकालमनन्तरम्।
कथमर्थाच्च धर्माच्च न हीयेमहि माधव ॥ ८४

---

नीतिमेव बलं कृत्वा युध्ये योत्स्ये। जयपराजयौ तु आत्मच्छन्देन स्वेच्छया न भवतः। तथा तद्वत् भूतानां जीवितं मरणं च स्वेच्छया न स्तः ॥ ५७ ॥ ५८ ॥ अनुशयः पश्चात्तापः ॥६५॥ शेषः शत्रोः। शेषं स्वस्य ॥ ६६ ॥ अनिर्वृत्तेन अस्वस्थेन ॥ ६९ ॥ अतइति। यतः अन्तरं छिद्रं नित्यं अपरिहार्यं अतो हेतोः अन्ततोऽन्यथा स्वस्य शत्रोर्वा नाशं विना शान्तिर्नास्ति ॥७२॥ अयं दोषः नाशाख्यः ॥ ७३ ॥ इद्धा प्रदीप्ता ॥ ७४ ॥ त्यागेन राज्यस्येति शेषः। तदृते राज्यं विना। द्विषतां संशयात् किं शत्रवश्छिद्रे प्रहरिष्यन्ति उत उपेक्षां करिष्यन्तीत्येवंरूपात्। आत्मनः भ्रष्टश्रीकस्य सद्यः समुच्छेदात् नाशसंभवात्। अतो राज्यत्यागो न युक्त इति भावः ॥ ७५ ॥ दारुणं युद्धम् तच्छुनामिव निन्द्यमित्यर्थः ॥ ७८ ॥ क्ष्वेडा ध्वनिकौटिल्यम्। विवर्तनं भूमौ लुण्ठनम्। दन्तदर्शनं मुखस्य व्यादानेन ॥ ७९ ॥ प्रहास्यति न स्वीकरिष्यति ॥ ८३ ॥

ईदृशेऽत्यर्थकृच्छ्रेऽस्मिन्कमन्यं मधुसूदन ।
उपसंप्रष्टुमर्हामि त्वामृते पुरुषोत्तम ॥ ८५
प्रियश्च प्रियकामश्च गतिज्ञः सर्वकर्मणाम् ।
को हि कृष्णास्ति नस्त्वादृक्सर्वनिश्चयवित्सुहृत्॥
वैशंपायन उवाच ।
एवमुक्तः प्रत्युवाच धर्मराजं जनार्दनः ।
उभयोरेव वामर्थे यास्यामि कुरुसंसदम् ॥ ८७
शमं तत्र लभेयं चेद्युष्मदर्थमहापयन् ।
पुण्यं मे सुमहद्राजंश्चरितं स्यान्महाफलम् ॥ ८८
मोचयेयं मृत्युपाशात्संरब्धान्कुरुसृञ्जयान् ।
पाण्डवान्धार्तराष्ट्रांश्च सर्वां च पृथिवीमिमाम् ८९
युधिष्ठिर उवाच ।
न ममैतन्मतं कृष्ण यत्त्वं यायाः कुरून्प्रति ।
सुयोधनः सूक्तमपि न करिष्यति ते वचः ॥९०
समेतं पार्थिवं क्षत्रं दुर्योधनवशानुगम् ।
तेषां मध्यावतरणं तव कृष्ण न रोचये ॥ ९१
न हि नः प्रीणयेद्द्रव्यं न देवत्वं कुतः सुखम् ।
न च सर्वामरैश्वर्यं तव द्रोहेण माधव ॥ ९२
श्रीभगवानुवाच ।
जानाम्येतां महाराज धार्तराष्ट्रस्य पापताम् ।
अवाच्यास्तु भविष्यामः सर्वलोके महीक्षितां ९३
न चापि मम पर्याप्ताः सहिताः सर्वपार्थिवाः ।
क्रुद्धस्य संयुगे स्थातुं सिंहस्येवेतरे मृगाः ॥ ९४
अथ चेत्ते प्रवर्तेरन्मयि किंचिदसांप्रतम् ।
निर्दहेयं कुरून्सर्वानिति मे धीयते मतिः ॥ ९५
न जातु गमनं पार्थ भवेत्तत्र निरर्थकम् ।
अर्थप्राप्तिः कदाचित्स्यादन्ततो वाप्यवाच्यता ९६
'एवमुक्तः प्रत्युवाच धर्मराजो जनार्दनम् ।
भ्रातॄणां समवेतानां सकाशे पुरुषोत्तमम्' ॥ ९७
युधिष्ठिर उवाच ।
यत्तुभ्यं रोचते कृष्ण स्वस्ति प्राप्नुहि कौरवान् ।
कृतार्थं स्वस्तिमन्तं त्वां द्रक्ष्यामि पुनरागतम् ॥ ९८
विष्वक्सेन कुरून्गत्वा भरताञ्शमयन्प्रभो ।
यथा सर्वे सुमनसः सह स्याम सुचेतसः ॥ ९९
भ्राता चासि सखा चासि बीभत्सोर्मम च प्रियः ।
सौहृदेनाविशङ्क्योऽसि स्वस्ति प्राप्नुहि भूतये १००
अस्मान्वेत्थ परान्वेत्थ वेत्थार्थान्वेत्थ भाषितुम् ।
यद्यदस्मद्धितं कृष्ण तत्तद्वाच्यः सुयोधनः ॥ १०१
यद्यद्धर्मेण संयुक्तमुपपद्येद्धितं वचः ।
तत्तत्केशव भाषेथाः सान्त्वं वा यदि वेतरत् १०२

॥ इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

## द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

श्रीकृष्णेन युधिष्ठिरंप्रति युद्धपक्षस्थिरीकरणपूर्वकं लोकसंशयनिरासाय शमार्थं प्रयतनकथनम् ॥ १ ॥

श्रीभगवानुवाच ।
सञ्जयस्य श्रुतं वाक्यं भवतश्च श्रुतं मया ।
सर्वं जानाम्यभिप्रायं तेषां च भवतश्च यः ॥ १
तव धर्माश्रिता बुद्धिस्तेषां वैराश्रया मतिः ।
यदयुद्धेन लभ्येत तत्ते बहुमतं भवेत् ॥ २
न चैवं नैष्ठिकं कर्म क्षत्रियस्य विशांपते ।
आहुराश्रमिणः सर्वे न भैक्षं क्षत्रियश्चरेत् ॥ ३
जयो वधो वा सङ्ग्रामे धात्राऽऽदिष्टः सनातनः ।
स्वधर्मः क्षत्रियस्यैष कार्पण्यं न प्रशस्यते ॥ ४
न हि कार्पण्यमास्थाय शक्या वृत्तिर्युधिष्ठिर ।
विक्रमस्व महाबाहो जहि शत्रून्परन्तप ॥ ५
अतिगृद्धाः कृतस्नेहा दीर्घकालं सहोषिताः ।
कृतमित्राः कृतबला धार्तराष्ट्राः परन्तप ॥ ६
न पर्यायोऽस्ति यत्साम्यं त्वयि कुर्युर्विशांपते ।

तथा वदेति शेषः ॥ ९९ ॥ एकसप्ततितमोऽध्यायः ॥ ७१ ॥
नैष्ठिकं कर्म यावज्जीवं ब्रह्मचर्यं पारिव्राज्यं च । विहितमिति शेषः ॥ ३ ॥ कार्पण्यं ग्रामपञ्चकं देहीति दीनवचनम् ॥ ४ ॥
वृत्तिः जीविका कर्तुमिति शेषः ॥ ५ ॥ अतिगृद्धाः अत्यन्तलुब्धाः ॥ ६ ॥ पर्याय उपायः । यद्येन बलवत्तां स्वस्येति

बलवत्तां हि मन्यन्ते भीष्मद्रोणकृपादिभिः ॥ ७
यावच्च मार्दवेनैतान्राजन्नुपचरिष्यसि ।
तावदेते हरिष्यन्ति तव राज्यमरिन्दम ॥ ८
नानुक्रोशान्न कार्पण्यान्न च धर्मार्थकारणात् ।
अलं कर्तुं धार्तराष्ट्रास्तव काममरिन्दम ॥ ९
एतदेव निमित्तं ते धार्तराष्ट्रो यथा त्वयि ।
नान्वतप्यत कोपेन तव कृत्वाऽपि दुष्करम् १०
पितामहस्य द्रोणस्य विदुरस्य च धीमतः ।
ब्राह्मणानां च साधूनां राज्ञश्च नगरस्य च ॥११
पश्यतां कुरुमुख्यानां सर्वेषामेव तत्त्वतः ।
दानशीलं मृदुं दान्तं धर्मशीलमनुव्रतम् ॥ १२
यत्त्वामुपधिना राजन्द्यूते वञ्चितवांस्तदा ।
न चापत्रपते तेन नृशंसः स्वेन कर्मणा ॥ १३
तथाशीलसमाचारे राजन्मा प्रणयं कृथाः ।
वध्यास्ते सर्वलोकस्य किं पुनस्तव भारत ॥ १४
वाग्भिस्त्वप्रतिरूपाभिरतुदत्त्वां सहानुजम् ।
श्लाघमानः प्रहृष्टः सन्भ्रातृभिः सह भाषते १५
एतावत्पाण्डवानां हि नास्ति किंचिदिह स्वकम् ।
नामधेयं च गोत्रं च तदप्येषां न शिष्यते ॥१६
कालेन महता चैषां भविष्यति पराभवः ।
प्रकृतिं ते भजिष्यन्ति नष्टप्रकृतयो मयि ॥ १७
दुःशासनेन पापेन तदा द्यूते प्रवर्तिते ।
अनाथवत्तदा देवी द्रौपदी सुदुरात्मना ॥ १८
आकृष्य केशे रुदती सभायां राजसंसदि ।
भीष्मद्रोणप्रमुखतो गौरिति व्याहृता मुहुः॥१९
भवता वारिताः सर्वे भ्रातरो भीमविक्रमाः ।
धर्मपाशनिबद्धाश्च न किंचित्प्रतिपेदिरे ॥ २०
एताश्चान्याश्च परुषा वाचः स समुदीरयन् ।
श्लाघते ज्ञातिमध्ये स त्वयि प्रव्रजिते वनम् २१
ये तत्रासन्समानीतास्ते दृष्ट्वा त्वामनागसम् ।
अश्रुकण्ठा रुदन्तश्च सभायामासते सदा ॥ २२
न चैनमभ्यनन्दंस्ते राजानो ब्राह्मणैः सह ।
सर्वे दुर्योधनं तत्र निन्दन्ति स्म सभासदः ॥२३
कुलीनस्य च या निन्दा वधो वाऽमित्रकर्शन ।
महागुणो वधो राजन्न तु निन्दा कुजीविका २४
तदैव निहतो राजन्यदैव निरपत्रपः ।
निन्दितश्च महाराज पृथिव्यां सर्वराजभिः ॥२५
ईषत्करो वधस्तस्य यस्य चारित्रमीदृशम् ।
प्रस्कुन्देन प्रतिस्तब्धश्छिन्नमूल इव द्रुमः ॥ २६
वध्यः सर्प इवानार्यः सर्वलोकस्य दुर्मतिः ।
जह्येनं त्वममित्रघ्न मा राजन्विचिकित्सिथाः २७
सर्वथा त्वत्क्षमं चैतद्रोचते च ममानघ ।
यत्त्वं पितरि भीष्मे च प्रणिपातं समाचरेः ॥२८
अहं तु सर्वलोकस्य गत्वा छेत्स्यामि संशयम् ।
येषामस्ति द्विधाभावो राजन्दुर्योधनं प्रति ॥ २९
मध्ये राज्ञामहं तत्र प्रातिपौरुषिकान्गुणान् ।
तव सङ्कीर्तयिष्यामि ये च तस्य व्यतिक्रमाः ३०
ब्रुवतस्तत्र मे वाक्यं धर्मार्थसहितं हितम् ।
निशम्य पार्थिवाः सर्वे नानाजनपदेश्वराः ॥३१
त्वयि संप्रतिपत्स्यन्ते धर्मात्मा सत्यवागिति ।
तस्मिंश्चाधिगमिष्यन्ति यथा लोभादवर्तत ॥ ३२
गर्हयिष्यामि चैवैनं पौरजानपदेष्वपि ।
वृद्धबालानुपादाय चातुर्वर्ण्ये समागते ॥ ३३
शमं वै याचमानस्त्वं नाधर्मं तत्र लप्स्यसे ।
कुरून्विगर्हयिष्यन्ति धृतराष्ट्रं च पार्थिवाः ॥३४
तस्मिँल्लोकपरित्यक्ते किं कार्यमवशिष्यते ।
हते दुर्योधने राजन्यदन्यत्क्रियतामिति ॥ ३५
यात्वा चाहं कुरून्सर्वान्युष्मदर्थमहापयन् ।
यतिष्ये प्रशमं कर्तुं लक्षयिष्ये च चेष्टितम् ॥३६
कौरवाणां प्रवृत्तिं च गत्वा युद्धाधिकारिकाम् ।
निशम्य विनिवर्तिष्ये जयाय तव भारत ॥ ३७
सर्वथा युद्धमेवाहमाशंसामि परैः सह ।

---

शेषः ॥ ७ ॥ अनुक्रोशात् भवत्सु कृपातः । कार्पण्यात् स्वस्य दैन्यात् । अलं कर्तुं पूर्णं कर्तुं न समर्थाः ॥ ९ ॥ निमित्तं अशमे कारणम् ॥१०॥ प्रकृतिं पञ्चताम् । मयि मत्समीपे नष्टा प्रकृतिः शौर्यादिरूपः स्वभावो येषाम् ॥१७॥ गौरिव सर्वभोज्येत्युपहासो गौर्गौरिति ॥ १९ ॥ प्रस्कुन्देन चक्राकारया वेदिकया ॥ २६ ॥ द्विधाभावः अयं साधुरसाधुर्वेति संशयः ॥ २९ ॥ प्रातिपौरुषिकान् सर्वपुरुषसाधारणान् ॥ ३० ॥ हते निन्द्यतया नष्टप्राये ॥ ३५ ॥ यात्वा गत्वा ॥ ३६ ॥ निशम्य आलोच्य ॥ ३७ ॥

निमित्तानि हि सर्वाणि तथा प्रादुर्भवन्ति मे ३८
मृगाः शकुन्ताश्च वदन्ति घोरं
हस्त्यश्वमुख्येषु निशामुखेषु ।
घोराणि रूपाणि तथैव चाग्नि-
र्वर्णान्बहून्पुष्यति घोररूपान् ॥ ३९
मनुष्यलोकक्षयकृत्सुघोरो
नो चेदनुप्राप्त इहान्तकः स्यात् ।
शस्त्राणि यत्रं कवचान्रथांश्च
नागान्हयांश्च प्रतिपादयित्वा ॥ ४०
योधाश्च सर्वे कृतनिश्चयास्ते
भवन्तु हस्त्यश्वरथेषु यत्ताः ।
साङ्ग्रामिकं ते यदुपार्जनीयं
सर्वं समग्रं कुरु तन्नरेन्द्र ॥ ४१
दुर्योधनो न ह्यलमद्य दातुं
जीवंस्तवैतन्नृपते कथंचित् ।
यत्ते पुरस्तादभवत्समृद्धं
द्यूते हृतं पाण्डवमुख्य राज्यम् ॥ ४२

॥ इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

## त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

भीमसेनेन श्रीकृष्णंप्रति दुर्योधनस्य दुराराध्यत्वकथनपूर्वकं यथाकथंचित् शमस्यावश्यकर्तव्यत्वकथनम् ॥ १ ॥

भीम उवाच ।
यथायथैव शान्तिः स्यात्कुरूणां मधुसूदन ।
तथातथैव भाषेथा मा स्म युद्धेन भीषयेः ॥ १
अमर्षी जातसंरम्भः श्रेयोद्वेषी महामनाः ।
नोग्रं दुर्योधनो वाच्यः साम्नैवैनं समाचरेः ॥ २
प्रकृत्या पापसत्त्वश्च तुल्यचेतास्तु दस्युभिः ।
ऐश्वर्यमदमत्तश्च कृतवैरश्च पाण्डवैः ॥ ३
अदीर्घदर्शी निष्ठूरी क्षेप्ता क्रूरपराक्रमः ।
दीर्घमन्युरनेयश्च पापात्मा निकृतिप्रियः ॥ ४
म्रियेतापि न भज्येत नैव जह्यात्स्वकं मतम् ।
तादृशेन शमः कृष्ण मन्ये परमदुष्करः ॥ ५
सुहृदामप्यवाचीनस्त्यक्तधर्मा प्रियानृतः ।
प्रतिहन्त्येव सुहृदां वाचश्चैव मनांसि च ॥ ६
स मन्युवशमापन्नः स्वभावं दुष्टमास्थितः ।
स्वभावात्पापमभ्येति तृणैश्छन्न इवोरगः ॥ ७
दुर्योधनो हि यत्सेनः सर्वथा विदितस्तव ।
यच्छीलो यत्स्वभावश्च यद्बलो यत्पराक्रमः ॥ ८
पुरा प्रसन्नाः कुरवः सहपुत्रास्तथा वयम् ।
इन्द्रज्येष्ठा इवाभूम मोदमानाः सबान्धवाः ॥ ९
दुर्योधनस्य क्रोधेन भरता मधुसूदन ।
धक्ष्यन्ते शिशिरापाये वनानीव हुताशनैः ॥ १०
अष्टादशेमे राजानः प्रख्याता मधुसूदन ।
ये समुच्चिच्छिदुर्ज्ञातीन्सुहृदश्च सबान्धवान् ॥ ११
असुराणां समृद्धानां ज्वलतामिव तेजसा ।
पर्यायकाले धर्मस्य प्राप्ते कलिरजायत ॥ १२
हैहयानामुदावर्तो नीपानां जनमेजयः ।
बहुलस्तालजङ्घानां कृमीणामुद्धतो वसुः ॥ १३
अजबिन्दुः सुवीराणां सुराष्ट्राणां रुषर्द्धिकः ।
अर्कजश्च बलीहानां चीनानां धौतमूलकः ॥ १४
हयग्रीवो विदेहानां वरयुश्च महौजसाम् ।
बाहुः सुन्दरवंशानां दीप्ताक्षाणां पुरूरवाः ॥ १५
सहजश्चेदिमत्स्यानां प्रवीराणां वृषध्वजः ।
धारणश्चन्द्रवत्सानां मुकुटानां विगाहनः ॥ १६
शमश्च नन्दिवेगानामित्येते कुलपांसनाः ।
युगान्ते कृष्ण संभूताः कुलेषु पुरुषाधमाः ॥ १७
अप्ययं नः कुरूणां स्याद्युगान्ते कालसंभृतः ।

तर्हि एतन्न स्यादिति शेषः । प्रतिपादयित्वा सज्जीकृत्य ॥ ४० ॥ द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

निष्ठूरी निष्ठुरवाक् । क्षेप्ता निन्दकः । अनेयः शिक्षयितुमयोग्यः ॥ ४ ॥ अवाचीनो विपरीतः ॥ ६ ॥ पर्यायकाले धर्मान्तकाले ॥ १२ ॥

नारद उवाच ।
ततस्ते पार्थिवाः सर्वे शिरसा जननीं तदा ॥ २६
अभिवाद्य नमस्कृत्य मातामहमथाब्रुवन् ।
उच्चैरनुपमैः स्निग्धैः स्वरैरापूर्य मेदिनीम् ।
मातामहं नृपतयस्तारयन्तो दिवश्च्युतम् ॥ २७
'राजान ऊचुः ।
राजधर्मगुणोपेताः सत्यधर्मगुणान्विताः ।
दौहित्रास्ते वयं राजन्दिवमारोह पार्थिव ॥ २८
नारद उवाच ।'
अथाकस्मादुपगतो गालवोऽप्याह पार्थिवम् ।
तपसो मेऽष्टभागेन स्वर्गमारोहतां भवान् ॥ २९

॥ इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

## द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

स्वदौहित्रादिदत्तपुण्यफलप्रभावेण पुनर्ययातेः स्वर्गगमनम् ॥ १ ॥

नारद उवाच ।
प्रत्यभिज्ञातमात्रोऽथ सद्भिस्तैर्नरपुङ्गवः ।
समारुरोह नृपतिरस्पृशन्वसुधातलम् ।
ययातिर्दिव्यसंस्थानो बभूव विगतज्वरः ॥ १
दिव्यमाल्याम्बरधरो दिव्याभरणभूषितः ।
दिव्यगन्धगुणोपेतो न पृथ्वीमस्पृशत्पदा ॥ २
ततो वसुमनाः पूर्वमुच्चैरुच्चारयन्वचः ॥
ख्यातो दानपतिर्लोके व्याजहार नृपं तदा ॥३
प्राप्तवानसि यल्लोके सर्ववर्णेष्वगर्हया ।
तदप्यथ च दास्यामि तेन संयुज्यतां भवान् ४
यत्फलं दानशीलस्य क्षमाशीलस्य यत्फलम् ।
यच्च मे फलमाधाने तेन संयुज्यतां भवान् ॥ ५
ततः प्रतर्दनोऽप्याह वाक्यं क्षत्रियपुङ्गवः ।
यथा धर्मरतिर्नित्यं नित्यं युद्धपरायणः ॥ ६
प्राप्तवानसि यल्लोके क्षत्रवंशोद्भवं यशः ।
वीरशब्दफलं चैव तेन संयुज्यतां भवान् ।
यथा धर्मे रतिर्नित्यं तेन सत्येन खं व्रज ॥ ७
शिबिरौशीनरो धीमानुवाच मधुरां गिरम् ।
यथा बालेषु नारीषु वैवाह्येषु तथैव च ॥ ८
सङ्गरेषु निपातेषु तथा तद्व्यसनेषु च ।
अनृतं नोक्तपूर्वं मे तेन सत्येन खं व्रज ॥ ९
यथा प्राणांश्च राज्यं च राजन्कामसुखानि च ।
त्यजेयं न पुनः सत्यं तेन सत्येन खं व्रज॥ १०
यथा सत्येन मे धर्मो यथा सत्येन पावकः ।
प्रीतः शतक्रतुश्चैव तेन सत्येन खं व्रज ॥ ११
अष्टकस्त्वथ राजर्षिः कौशिको माधवीसुतः ।
अनेकशतयज्वानं नाहुषं प्राह धर्मवित् ॥ १२
शतशः पुण्डरीका मे गोसवाश्चरिताः प्रभो ।
क्रतवो वाजपेयाश्च तेषां फलमवाप्नुहि ॥ १३
न मे रत्नानि न धनं न तथाऽन्ये परिच्छदाः ।
क्रतुष्वनुपयुक्तानि तेन सत्येन खं व्रज ॥ १४
नारद उवाच ।
यथायथा हि जल्पन्ति दौहित्रास्तं नराधिपम् ।
तथतथा वसुमतीं त्यक्त्वा राजा दिवं ययौ ॥ १५
एवं सर्वे समस्तैस्ते राजानः सुकृतैस्तदा ।
ययातिं स्वर्गतो भ्रष्टं तारयामासुरञ्जसा ॥ १६
दौहित्राः स्वेन धर्मेण यज्ञदानकृतेन वै ।
चतुर्षु राजवंशेषु संभूताः कुलवर्धनाः ।
मातामहं महाप्राज्ञं दिवमारोपयन्त ते ॥ १७
राजान ऊचुः ।
राजधर्मगुणोपेताः सर्वधर्मगुणान्विताः ।
दौहित्रास्ते वयं राजन्दिवमारोह पार्थिव ॥ १८

॥ इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

---

अष्टभागेन अष्टमांशेन ॥२९॥ एकविंशाधिकशततमोऽध्यायः ॥ प्रत्यभिज्ञातेति ॥ १ ॥ आधाने अग्न्याधानोपलक्षिते श्रौत-धर्मे ॥ ५ ॥ आपत्सु संकटेषु । व्यसनेषु द्यूतादिषु । खं स्वर्गम् ॥ ९ ॥ द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

## त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

स्वर्गे ययातिप्रश्नानुरोधेन पितामहेन तत्पतनकारणकथनम् ॥ १ ॥ नारदेन ययात्युपाख्यानोपसंहारपूर्वकं दुर्योधनंप्रति गालवययातिदृष्टान्तप्रदर्शनेन निर्बन्धाभिमानत्यागपूर्वकं पाण्डवैः सन्धिकरणविधानम् ॥ २ ॥

नारद उवाच ।
सद्भिरारोपितः स्वर्गं पार्थिवैर्भूरिदक्षिणैः ।
अभ्यनुज्ञाय दौहित्रान्ययातिर्दिवमास्थितः ॥ १
अभिवृष्टश्च वर्षेण नानापुष्पसुगन्धिना ।
परिष्वक्तश्च पुण्येन वायुना पुण्यगन्धिना ॥ २
अचलं स्थानमासाद्य दौहित्रफलनिर्जितम् ।
कर्मभिः स्वैरुपचितो जज्वाल परया श्रिया ॥ ३
उपगीतोपनृत्तश्च गन्धर्वाप्सरसां गणैः ।
प्रीत्या प्रतिगृहीतश्च स्वर्गे दुन्दुभिनिःस्वनैः ॥ ४
अभिष्टुतश्च विविधैर्देवराजर्षिचारणैः ।
अर्चितश्चोत्तमार्घेण दैवतैरभिनन्दितः ॥ ५
प्राप्तः स्वर्गफलं चैव तमुवाच पितामहः ।
निर्वृतं शान्तमनसं वचोभिस्तर्पयन्निव ॥ ६
चतुष्पादस्त्वया धर्मश्चितो लोक्येन कर्मणा ।
अक्षयस्तव लोकोऽयं कीर्तिश्चैवाक्षया दिवि ॥ ७
पुनस्त्वयैव राजर्षे स्वकृतेन विघातितम् ।
आवृतं तमसा चेतः सर्वेषां स्वर्गवासिनाम् ॥ ८
येन त्वां नाभिजानन्ति ततोऽज्ञातोसि पातितः ।
प्रीत्यैव चासि दौहित्रैस्तारितस्त्वमिहागतः ॥ ९
स्थानं च प्रतिपन्नोऽसि कर्मणा स्वेन निर्जितम् ।
अचलं शाश्वतं पुण्यमुत्तमं ध्रुवमव्ययम् ॥ १०
ययातिरुवाच ।
भगवन्संशयो मेऽस्ति कश्चित्तं छेत्तुमर्हसि ।
न ह्यन्यमहमर्हामि प्रष्टुं लोकपितामह ॥ ११
बहुवर्षसहस्रान्तं प्रजापालनवर्धितम् ।
अनेकक्रतुदानौघैरार्जितं मे महत्फलम् ॥ १२
कथं तदल्पकालेन क्षीणं येनास्मि पातितः ।
भगवन्वेत्थ लोकांश्च शाश्वतान्मम निर्मितान् ।
कथं नु मम तत्सर्वं विप्रनष्टं महाद्युते ॥ १३
पितामह उवाच ।
बहुवर्षसहस्रान्तं प्रजापालनवर्धितम् ।
अनेकक्रतुदानौघैर्यत्त्वयोपार्जितं फलम् ॥ १४
तदनेनैव दोषेण क्षीणं येनासि पातितः ।
अभिमानेन राजेन्द्र धिक्कृतः स्वर्गवासिभिः ॥ १५
नायं मानेन राजर्षे न बलेन न हिंसया ।
न शाठ्येन न मायाभिर्लोको भवति शाश्वतः ॥ १६
नावमान्यास्त्वया राजन्नधमोत्कृष्टमध्यमाः ।
न हि मानप्रदग्धानां कश्चिदस्ति शमः क्वचित् ॥ १७
पतनारोहणमिदं कथयिष्यन्ति ये नराः ।
विषमाण्यपि ते प्राप्तास्तरिष्यन्ति न संशयः ॥ १८
नारद उवाच ।
एष दोषोऽभिमानेन पुरा प्राप्तो ययातिना ।
निर्बन्धतातिमात्रं च गालवेन महीपते ॥ १९
श्रोतव्यं हितकामानां सुहृदां हितमिच्छताम् ।
न कर्तव्यो हि निर्बन्धो निर्बन्धो हि क्षयोदयः ॥ २०
तस्मात्त्वमपि गान्धारे मानं क्रोधं च वर्जय ।
सन्धत्स्व पाण्डवैर्वीर संरम्भं त्यज पार्थिव ॥ २१
स भवान्सुहृदां पथ्यं वचो गृह्णातु माऽनृतम् ।
समर्थैर्विग्रहं कृत्वा विषमस्थो भविष्यसि ॥ २२
ददाति यत्पार्थिव यत्करोति
यद्वा तपस्तप्यति यज्जुहोति ।
न तस्य नाशोऽस्ति न चापकर्षो
नान्यस्तदश्नाति स एव कर्ता ॥ २३
इदं महाख्यानमनुत्तमं हितं
बहुश्रुतानां गतरोषरागिणाम् ।
समीक्ष्य लोके बहुधा प्रधारितं
त्रिवर्गदृष्टिः पृथिवीमुपाश्नुते ॥ २४

स्वकृतेन सम्यक्संपादितेन कर्मणा । मया समोऽन्यो नास्तीति वाक्प्रयोगेण । तमसा क्रोधेन ॥ ८ ॥ प्रधारितं निश्चितम् ॥ २४ ॥ त्रयोविंशत्यधिकशततमोऽध्यायः ॥१२३॥

'एतत्पुण्यतमं राजन्ययातेश्चरितं महत् । यच्छ्रुत्वा श्रावयित्वा च स्वर्गं यान्तीह मानवाः'२५

॥ इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

---

## चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

धृतराष्ट्रेण श्रीकृष्णंप्रति दुर्योधनानुनयप्रार्थना ॥ १ ॥ श्रीकृष्णेन दुर्योधनानुनयः ॥ २ ॥

धृतराष्ट्र उवाच ।
भगवन्नेवमेवैतद्यथा वदसि नारद ।
इच्छामि चाहमप्येवं न त्वीशो भगवन्नहम् ॥ १
वैशंपायन उवाच ।
एवमुक्त्वा ततः कृष्णमभ्यभाषत कौरवः ।
स्वर्ग्यं लोक्यं च मामात्थ धर्म्यं न्याय्यं च केशव॥२
न त्वहं स्ववशस्तात क्रियमाणं न मे प्रियम् ।
'न मंस्यन्ते दुरात्मानः पुत्रा मम जनार्दन ॥' ३
अङ्ग दुर्योधनं कृष्ण मन्दं शास्त्रातिगं मम ।
अनुनेतुं महाबाहो यतस्व पुरुषोत्तम ॥ ४
न शृणोति महाबाहो वचनं साधु भाषितम् ।
गान्धार्याश्च हृषीकेश विदुरस्य च धीमतः ।
अन्येषां चैव सुहृदां भीष्मादीनां हितैषिणाम् ॥ ५
स त्वं पापमतिं क्रूरं पापचित्तमचेतनम् ।
अनुशाधि दुरात्मानं स्वयं दुर्योधनं नृपम् ॥ ६
सुहृत्कार्यं तु सुमहत्कृतं ते स्याज्जनार्दन ॥ ७
वैशंपायन उवाच ।
ततोऽभ्यावृत्य वार्ष्णेयो दुर्योधनममर्षणम् ।
अब्रवीन्मधुरां वाचं सर्वधर्मार्थतत्त्ववित् ॥ ८
दुर्योधन निबोधेदं मद्वाक्यं कुरुसत्तम ।
शर्मार्थं ते विशेषेण सानुबन्धस्य भारत ॥ ९
महाप्राज्ञकुले जातः साध्वेतत्कर्तुमर्हसि ।
श्रुतवृत्तोपसंपन्नः सर्वैः समुदितो गुणैः ॥ १०
दौष्कुलेया दुरात्मानो नृशंसा निरपत्रपाः ।
त एतदीदृशं कुर्युर्यथा त्वं तात मन्यसे ॥ ११
धर्मार्थयुक्ता लोकेऽस्मिन्प्रवृत्तिर्लक्ष्यते सताम् ।
असतां विपरीता तु लक्ष्यते भरतर्षभ ।
विपरीता त्वियं वृत्तिरसकृल्लक्ष्यते त्वयि ॥ १२
अधर्मश्चानुबन्धोऽत्र घोरः प्राणहरो महान् ।
अनिष्टश्चानिमित्तश्च न च शक्यश्च भारत ॥ १३
तमनर्थं परिहरन्नात्मश्रेयः करिष्यसि ।
भ्रातॄणामथ भृत्यानां मित्राणां च परन्तप ॥ १४
अधर्म्यादयशस्याच्च कर्मणस्त्वं प्रमोक्ष्यसे ॥ १५
प्राज्ञैः शूरैर्महोत्साहैरात्मवद्भिर्बहुश्रुतैः ।
सन्धत्स्व पुरुषव्याघ्र पाण्डवैर्भरतर्षभ ।
तद्धितं च प्रियं चैव धृतराष्ट्रस्य धीमतः ॥ १६
पितामहस्य द्रोणस्य विदुरस्य महामतेः ।
कृपस्य सोमदत्तस्य बाह्लीकस्य च धीमतः ॥ १७
अश्वत्थाम्नो विकर्णस्य सञ्जयस्य विविंशतेः ।
ज्ञातीनां चैव भूयिष्ठं मित्राणां च परन्तप ॥ १८
शमे शर्म भवेत्तात सर्वस्य जगतस्तथा ।
ह्रीमानसि कुले जातः श्रुतवानानृशंस्यवान् ।
तिष्ठ तात पितुः शास्त्रे मातुश्च भरतर्षभ ॥ १९
एतच्छ्रेयो हि मन्यन्ते पिता यच्छास्ति भारत ।
उत्तमापद्गतः पूर्वं पितुः स्मरसि शासनम् ॥ २०
रोचते ते पितुस्तात पाण्डवैः सह सङ्गमः ।
सामात्यस्य कुरुश्रेष्ठ तत्तुभ्यं तात रोचताम् २१
श्रुत्वा यः सुहृदां शास्त्रं मर्त्यो न प्रतिपद्यते ।
विपाकान्ते दहत्येनं किंपाकमिव भक्षितम् ॥२२
यस्तु निःश्रेयसं वाक्यं मोहान्न प्रतिपद्यते ।
स दीर्घसूत्रो हीनार्थः पश्चात्तापेन युज्यते ॥२३
यस्तु निःश्रेयसं श्रुत्वा प्राक्तदेवाभिपद्यते ।
आत्मनो मतमुत्सृज्य स लोके सुखमेधते ॥ २४
योऽर्थकामस्य वचनं प्रातिकूल्यान्न मृष्यते ।
शृणोति प्रतिकूलानि द्विषतां वशमेति सः ॥२५
सतां मतमतिक्रम्य योऽसतां वर्तते मते ।

---

शास्त्रे शासने ॥ १९ ॥ किंपाकं महाकालफलम् ॥ २२ ॥ निःश्रेयसं कल्याणम ॥ २४ ॥

शोचन्ते व्यसने तस्य सुहृदो नचिरादिव ॥ २६
मुख्यानमात्यानुत्सृज्य यो निहीनान्निषेवते ।
स घोरामापदं प्राप्य नोत्तारमधिगच्छति ॥ २७
योऽसत्सेवी वृथाचारो न श्रोता सुहृदां सताम् ।
परान्वृणीते स्वान्द्वेष्टि तं गौस्त्यजति भारत ॥ २८
स त्वं विरुध्य तैर्वीरैरन्येभ्यस्त्राणमिच्छसि ।
अशिष्टेभ्योऽसमर्थेभ्यो मूढेभ्यो भरतर्षभ ॥ २९
को हि शक्रसमाञ्ज्ञातीनतिक्रम्य महारथान् ।
अन्येभ्यस्त्राणमाशंसेत्त्वदन्यो भुवि मानवः ॥ ३०
जन्मप्रभृति कौन्तेया नित्यं विनिकृतास्त्वया ।
न च ते जातु कुप्यन्ति धर्मात्मानो हि पाण्डवाः ३१
मिथ्योपचरितास्तात जन्मप्रभृति बान्धवाः ।
त्वयि सम्यङ्महाबाहो प्रतिपन्ना यशस्विनः ३२
त्वयाऽपि प्रतिपत्तव्यं तथैव भरतर्षभ ।
स्वेषु बन्धुषु मुख्येषु मा मन्युवशमन्वगाः ॥३३
त्रिवर्गयुक्तः प्राज्ञानामारम्भो भरतर्षभ ।
धर्मार्थावनुरुध्यन्ते त्रिवर्गासंभवे नराः ॥ ३४
पृथक्क विनिविष्टानां धर्मं धीरोऽनुरुध्यते ।
मध्यमोऽर्थं कलिं बालः काममेवानुरुध्यते ॥३५
इन्द्रियैः प्राकृतो लोभाद्धर्मं विप्रजहाति यः ।
कामार्थावनुपायेन लिप्समानो विनश्यति ॥ ३६
कामार्थौ लिप्समानस्तु धर्ममेवादितश्चरेत् ।
न हि धर्मादपैत्यर्थः कामो वाऽपि कदाचन ॥३७
उपायं धर्ममेवाहुस्त्रिवर्गस्य विशांपते ।
लिप्समानो हि तेनाशु कक्षेऽग्निरिव वर्धते ॥ ३८
स त्वं तातानुपायेन लिप्ससे भरतर्षभ ।
आधिराज्यं महद्दीप्तं प्रथितं सर्वराजसु ॥ ३९
आत्मानं तक्षति ह्येष वनं परशुना यथा ।
यः सम्यग्वर्तमानेषु मिथ्या राजन्प्रवर्तते ।
न तस्य हि मतिं छिन्द्याद्यस्य नेच्छेत्पराभवम् ४०
अविच्छिन्नमतेरस्य कल्याणे धीयते मतिः ।
आत्मवान्नावमन्येत त्रिषु लोकेषु भारत ॥ ४१
अप्यन्यं प्राकृतं कश्चित्किमु तान्पाण्डवर्षभान् ।
अमर्षवशमापन्नो न किंचिद्बुध्यते जनः ॥ ४२
छिद्यते ह्याततं सर्वं प्रमाणं पश्य भारत ।
श्रेयस्ते दुर्जनात्तात पाण्डवैः सह सङ्गतम् ॥ ४३
तैर्हि संप्रीयमाणस्त्वं सर्वान्कामानवाप्स्यसि ।
पाण्डवैर्निर्मितां भूमिं भुञ्जानो राजसत्तम ॥ ४४
पाण्डवान्पृष्ठतः कृत्वा त्राणमाशंससेऽन्यतः ।
दुःशासने दुर्विषहे कर्णे चापि ससौबले ॥ ४५
एतेष्वैश्वर्यमाधाय भूतिमिच्छसि भारत ।
न चैते तव पर्याप्ता ज्ञाने धर्मार्थयोस्तथा ॥ ४६
विक्रमे चाप्यपर्याप्ताः पाण्डवान्प्रति भारत ।
न हीमे सर्वराजानः पर्याप्ताः सहितास्त्वया ॥४७
क्रुद्धस्य भीमसेनस्य प्रेक्षितुं मुखमाहवे ।
इदं संनिहितं तात समग्रं पार्थिवं बलम् ॥ ४८
अयं भीष्मस्तथा द्रोणः कर्णश्चायं तथा कृपः ।
भूरिश्रवाः सौमदत्तिरश्वत्थामा जयद्रथः ॥ ४९
अशक्ताः सर्व एवैते प्रतियोद्धुं धनञ्जयम् ।
अजेयो ह्यर्जुनः सङ्ख्ये सर्वैरपि सुरासुरैः ।
मानुषैरपि गन्धर्वैर्मा युद्धे चेत आधिथाः ॥ ५०
दृश्यतां वा पुमान्कश्चित्समग्रे पार्थिवे बले ।
योऽर्जुनं समरे प्राप्य स्वस्तिमानाव्रजेद्गृहान् ५१
किं ते जनक्षयेणेह कृतेन भरतर्षभ ।
यस्मिञ्जिते जितं ते स्यात्पुमानेकः स दृश्यतां ५२
यः सदेवान्सगन्धर्वान्सयक्षासुरपन्नगान् ।
अजयत्खाण्डवप्रस्थे कस्तं युध्येत मानवः ॥ ५३
तथा विराटनगरे श्रूयते महदद्भुतम् ।
एकस्य च बहूनां च पर्याप्तं तन्निदर्शनम् ॥ ५४
युद्धे येन महादेवः साक्षात्सन्तोषितः शिवः ।
तमजेयमनाधृष्यं विजेतुं जिष्णुमच्युतम् ।
आशंससीह समरे वीरमर्जुनमूर्जितम् ॥ ५५
मद्द्वितीयं पुनः पार्थं कः प्रार्थयितुमर्हति ।
युद्धे प्रतीपमायान्तमपि साक्षात्पुरन्दरः ॥ ५६

गौः भूमिः ॥२८॥ उपचरिताः प्रचारिताः ॥ ३२ ॥ अर्थं कलिं कलहहेतुम् ॥ ३५ ॥ अनुपायेन हीनोपायेन ॥ ३६ ॥ निर्मितां वशीकरणेनोत्पादिताम् ॥४४॥ यस्मिन्नर्जुने जिते सति ते तव जितं जयः स्यात् ॥५२॥ चतुर्विंशत्यधिकशततमोऽध्यायः ॥१२४॥

बाहुभ्यामुद्वहेद्भूमिं दहेत्क्रुद्ध इमाः प्रजाः ।
पातयेत्त्रिदिवाद्देवान्योऽर्जुनं समरे जयेत् ॥ ५७
पश्य पुत्रांस्तथा भ्रातॄञ्ज्ञातीन्संबन्धिनस्तथा ।
त्वत्कृते न विनश्येयुरिमे भरतसत्तमाः ॥ ५८
अस्तु शेषं कौरवाणां मा पराभूदिदं कुलम् ।
कुलघ्न इति नोच्येथा नष्टकीर्तिर्नराधिप ॥ ५९
त्वामेव स्थापयिष्यन्ति यौवराज्ये महारथाः ।
महाराज्येऽपि पितरं धृतराष्ट्रं जनेश्वरम् ॥ ६०
मा तात श्रियमायान्तीमवमंस्थाः समुद्यताम् ।
अर्धं प्रदाय पार्थेभ्यो महतीं श्रियमाप्नुहि ॥ ६१
पाण्डवैः संशमं कृत्वा कृत्वा च सुहृदां वचः ।
संप्रीयमाणो मित्रैश्च चिरं भद्राण्यवाप्स्यसि ॥ ६२

॥ इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

---

## पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

भीष्मद्रोणाभ्यां दुर्योधनंप्रति श्रीकृष्णवचनादरणविधानम् ॥ १ ॥ तथा धृतराष्ट्रेणापि दुर्योधनंप्रति श्रीकृष्णवाक्यप्रत्याख्याने अनर्थप्राप्तिकथनम् ॥ २ ॥

वैशंपायन उवाच ।
ततः शान्तनवो भीष्मो दुर्योधनममर्षणम् ।
केशवस्य वचः श्रुत्वा प्रोवाच भरतर्षभ ॥ १
कृष्णेन वाक्यमुक्तोऽसि सुहृदां शममिच्छता ।
अन्वपद्यस्व तत्तात मा मन्युवशमन्वगाः ॥ २
अकृत्वा वचनं तात केशवस्य महात्मनः ।
श्रेयो न जातु न सुखं न कल्याणमवाप्स्यसि ॥ ३
धर्म्यमर्थ्यं महाबाहुराह त्वां तात केशवः ।
तदर्थमभिपद्यस्व मा राजन्नीनशः प्रजाः ॥ ४
ज्वलितां त्वमिमां लक्ष्मीं भारतीं सर्वराजसु ।
जीवतो धृतराष्ट्रस्य दौरात्म्याद्भ्रंशयिष्यसि ॥ ५
आत्मानं च सहामात्यं सपुत्रभ्रातृबान्धवम् ।
अहमित्यनया बुद्ध्या जीविताद्भ्रंशयिष्यसि ॥ ६
अतिक्रामन्केशवस्य तथ्यं वचनमर्थवत् ।
पितुश्च भारतश्रेष्ठ विदुरस्य च धीमतः ॥ ७
मा कुलघ्नः कुपुरुषो दुर्मतिः कापथं गमः ।
मातरं पितरं चैव मा मज्जीः शोकसागरे ॥ ८
अथ द्रोणोऽब्रवीत्तत्र दुर्योधनमिदं वचः ।
अमर्षवशमापन्नं निःश्वसन्तं पुनःपुनः ॥ ९
धर्मार्थयुक्तं वचनमाह त्वां तात केशवः ।
तथा भीष्मः शान्तनवस्तज्जुषस्व नराधिप ॥ १०
प्राज्ञौ मेधाविनौ दान्तावर्थकामौ बहुश्रुतौ ।
आहतुस्त्वां हितं वाक्यं तज्जुषस्व नराधिप ॥ ११
अनुतिष्ठ महाप्राज्ञ कृष्णभीष्मौ यदूचतुः ।
माधवं बुद्धिमोहेन माऽवमंस्थाः परन्तप ॥ १२
ये त्वां प्रोत्साहयन्त्येते नैते कृत्याय कर्हिचित् ।
वैरं परेषां ग्रीवायां प्रतिमोक्ष्यन्ति संयुगे ॥ १३
मा जीवनः प्रजाः सर्वाः पुत्रान्भ्रातॄंस्तथैव च ।
वासुदेवार्जुनौ यत्र विद्ध्यजेयानलं हि तान् ॥ १४
एतच्चैव मतं सत्यं सुहृदोः कृष्णभीष्मयोः ।
यदि नादास्यसे तात पश्चात्तप्स्यसि भारत ॥ १५
यथोक्तं जामदग्न्येन भूयानेष ततोऽर्जुनः ।
कृष्णो हि देवकीपुत्रो देवैरपि सुदुःसहः ॥
किं ते सुखप्रियेणेह प्रोक्तेन भरतर्षभ ॥ १६
एतत्ते सर्वमाख्यातं यथेच्छसि तथा कुरु ।
न हि त्वामुत्सहे वक्तुं भूयो भरतसत्तम ॥ १७
वैशंपायन उवाच ।
तस्मिन्वाक्यान्तरे वाक्यं क्षत्ताऽपि विदुरोऽब्रवीत् ।
दुर्योधनमभिप्रेक्ष्य धार्तराष्ट्रममर्षणम् ॥ १८
दुर्योधन न शोचामि त्वामहं भरतर्षभ ।
इमौ तु वृद्धौ शोचामि गान्धारीं पितरं च ते ॥ १९
यावनाथौ चरिष्येते त्वया नाथेन दुर्हृदा ।
हतमित्रौ हतामात्यौ लूनपक्षाविवाण्डजौ ॥ २०
भिक्षुकौ विचरिष्येते शोचन्तौ पृथिवीमिमाम् ।
कुलघ्नमीदृशं पापं जनयित्वा कुपूरुषम् ॥ २१
अथ दुर्योधनं राजा धृतराष्ट्रोऽभ्यभाषत ।

आसीनं भ्रातृभिः सार्धं राजभिः परिवारितम् २२
दुर्योधन निबोधेदं शौरिणोक्तं महात्मना ।
आदत्स्व शिवमत्यन्तं योगक्षेमवदव्ययम् ॥ २३
अनेन हि सहायेन कृष्णेनाक्लिष्टकर्मणा ।
इष्टान्सर्वानभिप्रायान्प्राप्स्यामः सर्वराजसु ॥ २४
सुसंहतः केशवेन तात गच्छ युधिष्ठिरम् ।
चर स्वस्त्ययनं कृत्स्नं भरतानामनामयम् ॥ २५
वासुदेवेन तीर्थेन तात गच्छस्व संशमम् ।
कालप्राप्तमिदं मन्ये मा त्वं दुर्योधनातिगाः ॥ २६
शमं चेद्याचमानं त्वं प्रत्याख्यास्यसि केशवम् ।
त्वदर्थमभिजल्पन्तं न तवास्त्यपराभवः ॥ २७

॥ इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

## षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

पुनर्भीष्मद्रोणाभ्यां दुर्योधनंप्रति परेषां युद्धसंनाहात्पूर्वमेव तैःसह शमविधानम् ॥ १ ॥

वैशंपायन उवाच ।
धृतराष्ट्रवचः श्रुत्वा भीष्मद्रोणौ समव्यथौ ।
दुर्योधनमिदं वाक्यमूचतुः शासनातिगम् ॥ १
यावत्कृष्णावसन्नद्धौ यावत्तिष्ठति गाण्डिवम् ।
यावद्धौम्यो न मेधाग्नौ जुहोतीह द्विषद्बलम् ॥ २
यावन्न प्रेक्षते क्रुद्धः सेनां तव युधिष्ठिरः ।
ह्रीनिषेवो महेष्वासस्तावच्छाम्यतु वैशसम् ॥ ३
यावन्न दृश्यते पार्थः स्वेऽप्यनीके व्यवस्थितः ।
भीमसेनो महेष्वासस्तावच्छाम्यतु वैशसम् ॥ ४
यावन्न चरते मार्गान्पृतनामभिधर्षयन् ।
भीमसेनो गदापाणिस्तावत्संशाम्य पाण्डवैः ॥ ५
यावन्न शातयत्याजौ शिरांसि गजयोधिनाम् ।
गदया वीरघातिन्या फलानीव वनस्पतेः ।
कालेन परिपक्वानि तावच्छाम्यतु वैशसम् ॥ ६
नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः ॥
विराटश्च शिखण्डी च शैशुपालिश्च दंशिताः ॥ ७
यावन्न प्रविशन्त्येते नक्रा इव महार्णवम् ।
कृतास्त्राः क्षिप्रमस्यन्तस्तावच्छाम्यतु वैशसम् ॥८
यावन्न सुकुमारेषु शरीरेषु महीक्षिताम् ।
गार्ध्रपत्राः पतन्त्युग्रास्तावच्छाम्यतु वैशसम् ॥ ९
चन्दनागुरुदिग्धेषु हारनिष्कधरेषु च ।
नोरस्सु यावद्योधानां महेष्वासैर्महेषवः ॥ १०
कृतास्त्रैः क्षिप्रमस्यद्भिर्दूरपातिभिरायसाः ।
अभिलक्ष्यैर्निपात्यन्ते तावच्छाम्यतु वैशसम् ॥ ११
अभिवादयमानं त्वां शिरसा राजकुञ्जरः ।
पाणिभ्यां प्रतिगृह्णातु धर्मराजो युधिष्ठिरः ॥ १२
ध्वजाङ्कुशपताकाङ्कं दक्षिणं ते सुदक्षिणः ।
स्कन्धे निक्षिपतां बाहुं शान्तये भरतर्षभ ॥ १३
रत्नौषधिसमेतेन रत्नाङ्गुलितलेन च ।
उपविष्टस्य पृष्ठं ते पाणिना परिमार्जतु ॥ १४
शालस्कन्धो महाबहुस्त्वां स्वजानो वृकोदरः ।
साम्नाऽभिवदतां चापि शान्तये भरतर्षभ ॥ १५
अर्जुनेन यमाभ्यां च त्रिभिस्तैरभिवादितः ।
मूर्ध्नि तान्समुपाघ्राय प्रेम्णाऽभिवद पार्थिव ॥ १६
दृष्ट्वा त्वां पाण्डवैर्वीरैर्भ्रातृभिः सह संगतम् ।
यावदानन्दजाश्रूणि प्रमुञ्चन्तु नराधिपाः ॥ १७
घुष्यतां राजधानीषु सर्वसंपन्महीक्षिताम् ।
पृथिवी भ्रातृभावेन भुज्यतां विज्वरो भव ॥ १८

॥ इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

---

सुसंहतः सुष्ठु एकीभूतः ॥ २५ ॥ तीर्थेन उपायेन ॥ २६ ॥ अपराभवो जयः ॥ २७ ॥ पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

मेधाग्नौ संग्रामाग्नौ । मेधो यज्ञः ॥ २ ॥ वैशसं वैरम् ॥३॥ षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

## सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

दुर्योधनेन श्रीकृष्णंप्रति स्वस्मिन्नपराधलेशोऽपि नास्तीति कथनम् ॥ १ ॥ भीष्मादिरक्षितस्य स्वस्याजय्यत्वकथनपूर्वकं युद्धे निधनसंभवेऽपि पाण्डवेभ्यः सूच्यग्रपरिमितभूमेरप्यप्रदानवचनम् ॥ २ ॥

वैशंपायन उवाच ।
श्रुत्वा दुर्योधनो वाक्यमप्रियं कुरुसंसदि ।
प्रत्युवाच महाबाहुं वासुदेवं यशस्विनम् ॥ १
प्रसमीक्ष्य भवानेतद्वक्तुमर्हति केशव ।
मामेव हि विशेषेण विभाष्य परिगर्हसे ॥ २
भक्तिवादेन पार्थानामकस्मान्मधुसूदन ।
भवान्गर्हयते नित्यं किं समीक्ष्य बलाबलम् ॥ ३
भवान्क्षत्ता च राजा वाऽप्याचार्यो वा पितामहः ।
मामेव परिगर्हन्ते नान्यं कंचन पाण्डवम् ॥ ४
न चाहं लक्षये कंचिद्व्यभिचारमिहात्मनः ।
अथ सर्वे भवन्तो मां विद्विषन्ति सराजकाः ॥५
न चाहं कंचिदत्यर्थमपराधमरिन्दम ।
विचिन्तयन्प्रपश्यामि सुसूक्ष्ममपि केशव ॥ ६
प्रियाभ्युपगते द्यूते पाण्डवा मधुसूदन ।
जिताः शकुनिना राज्यं तत्र किं मम दुष्कृतम् ॥७
यत्पुनर्द्रविणं किंचित्तत्राजीयन्त पाण्डवाः ।
तेभ्य एवाभ्यनुज्ञातं तत्तदा मधुसूदन ॥ ८
अपराधो न चास्माकं यत्ते ह्यक्षैः पराजिताः ।
अजेया जयतां श्रेष्ठ पार्थाः प्रव्राजिता वनम् ॥९
केन वाऽप्यपवादेन विरुद्ध्यन्त्यरिभिः सह ।
अशक्ताः पाण्डवाः कृष्ण प्रहृष्टाः प्रत्यमित्रवत् १०
किमस्माभिः कृतं तेषां कस्मिन्वा पुनरागसि ।
धार्तराष्ट्राञ्जिघांसन्ति पाण्डवाः सृञ्जयैः सह ॥११
न चापि वयमुग्रेण कर्मणा वचनेन वा ।
प्रभ्रष्टाः प्रणमामेह भयादपि शतक्रतुम् ॥ १२
न च तं कृष्ण पश्यामि क्षत्रधर्ममनुष्ठितम् ।
उत्सहेत युधा जेतुं यो नः शत्रुनिबर्हण ॥ १३
न हि भीष्मकृपद्रोणाः सकर्णा मधुसूदन ।
देवैरपि युधा जेतुं शक्याः किमुत पाण्डवैः ॥ १४
स्वधर्ममनुपश्यन्तो यदि माधव संयुगे ।
अस्त्रेण निधनं काले प्राप्स्यामः स्वर्ग्यमेव तत् ॥१५
मुख्यश्चैवैष नो धर्मः क्षत्रियाणां जनार्दन ।
यच्छयीमहि सङ्ग्रामे शरतल्पगता वयम् ॥ १६
ते वयं वीरशयनं प्राप्स्यामो यदि संयुगे ।
अप्रणम्यैव शत्रूणां न नस्तप्स्यन्ति माधव ॥ १७
कश्च जातु कुले जातः क्षत्रधर्मेण वर्तयन् ।
भयाद्वृत्तिं समीक्ष्यैवं प्रणमेदिह कर्हिचित् ॥ १८
उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेदिह कर्हिचित् ॥ १९
इति मातङ्गवचनं परीप्सन्ति हितेप्सवः ।
धर्माय चैव प्रणमेद्ब्राह्मणेभ्यश्च मद्विधः ॥ २०
अचिन्तयन्कंचिदन्यं यावज्जीवं तथा चरेत् ।
एष धर्मः क्षत्रियाणां मतमेतच्च मे सदा ॥ २१
राज्यांशश्चाभ्यनुज्ञातो यो मे पित्रा पुराऽभवत् ।
न स लभ्यः पुनर्जातु मयि जीवति केशव ॥ २२
यावच्च राजा ध्रियते धृतराष्ट्रो जनार्दन ।
न्यस्तशस्त्रा वयं ते वाऽप्युपजीवाम माधव ।
अप्रदेयं पुरा दत्तं राज्यं परवतो मम ॥ २३
अज्ञानाद्वा भयाद्वाऽपि मयि बाले जनार्दन ।
न तदद्य पुनर्लभ्यं पाण्डवैर्वृष्णिनन्दन ॥ २४
ध्रियमाणे महाबाहौ मयि संप्रति केशव ।
यावद्धि तीक्ष्णया सूच्या विद्ध्येदग्रेण केशव ।
तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान्प्रति ॥ २५

॥ इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

---

अपर्वणि अप्रस्तावे ॥ १९ ॥ मातंगः मुनिः ॥ २० ॥ | सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

## अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

श्रीकृष्णेन दुर्योधनंप्रति सगर्हणं पाण्डवेषु तत्कृतापनयानुस्मारणम् ॥ १ ॥ दुर्योधनस्य पाण्डवैरसन्धाने कौरवैर्बन्धनपूर्वकं पाण्डवेभ्यः स्वसमर्पणप्रतिपादकदुःशासनवचनश्रवणजकोपात् सभातो निर्गमनम् ॥ २ ॥ कृष्णेन धृतराष्ट्रंप्रति कुलस्यार्थे दुर्योधनपरित्यागविधानम् ॥ ३ ॥ तथा सदृष्टान्तप्रदर्शनं दुर्योधनस्य बन्धनपूर्वकं पाण्डवेभ्यः समर्पणविधानम्॥४॥

वैशंपायन उवाच ।

ततः प्रहस्य दाशार्हः क्रोधपर्याकुलेक्षणः ।
दुर्योधनमिदं वाक्यमब्रवीत्कुरुसंसदि ॥ १
लप्स्यसे वीरशयनं काममेतदवाप्स्यसि ।
स्थिरो भव सहामात्यो विमर्दो भविता महान् ॥ २
यच्चैतन्मन्यसे मूढ न मे कश्चिद्व्यतिक्रमः ।
पाण्डवेष्विति तत्सर्वं निबोध त्वं नराधिप ॥ ३
श्रिया संतप्यमानेन पाण्डवानां महात्मनाम् ।
त्वया दुर्मन्त्रितं द्यूतं सौबलेन च भारत ॥ ४
कथं च ज्ञातयस्तात श्रेयांसः साधुसंमताः ।
तथाऽन्याय्यमुपस्थातुं जिह्मेनाजिह्मचारिणः ॥ ५
अक्षद्यूतं महाप्राज्ञ सतां मतिविनाशनम् ।
असतां तत्र जायन्ते भेदाश्च व्यसनानि च ॥ ६
तदिदं व्यसनं घोरं त्वया द्यूतमुखं कृतम् ।
असमीक्ष्य सदाचारान्सार्धं पापानुबन्धनैः ॥ ७
कश्चान्यो भ्रातृभार्यां वै विप्रकर्तुं तथार्हति ।
आनीय च सभां व्यक्तं यथोक्ता द्रौपदी त्वया ॥ ८
कुलीना शीलसंपन्ना प्राणेभ्योऽपि गरीयसी ।
महिषी पाण्डुपुत्राणां तथा विनिकृता त्वया ॥ ९
जानन्ति कुरवः सर्वे यथोक्ताः कुरुसंसदि ।
दुःशासनेन कौन्तेयाः प्रव्रजन्तः परन्तपाः ॥ १०
सम्यग्वृत्तेष्वलुब्धेषु सततं धर्मचारिषु ।
स्वेषु बन्धुषु कः साधुश्चरेदेवमसांप्रतम् ॥ ११
नृशंसानामनार्याणां तथा परुषभाषणम् ।
कर्णदुःशासनाभ्यां च त्वया च बहुशः कृतम् ॥ १२
सह मात्रा प्रदग्धुं तान्बालकान्वारणावते ।
आस्थितः परमो यत्नो न समृद्धश्च तत्तव ॥ १३
ऊषुश्च सुचिरं कालं प्रच्छन्नाः पाण्डवास्तदा ।
मात्रा सहैकचक्रायां ब्राह्मणस्य निवेशने ॥ १४
विषेण सर्पबन्धैश्च यतिताः पाण्डवास्त्वया ।
सर्वोपायैर्विनाशाय न समृद्धं च तत्तव ॥ १५
एवंबुद्धिः पाण्डवेषु मिथ्यावृत्तिः सदा भवान् ।
कथं ते नापराधोऽस्ति पाण्डवेषु महात्मसु ॥ १६
'एवंवृत्तः कथं राज्ये स्थातुमर्हसि पापकृत् ।
स राज्याच्च सुखाच्चैव हास्यसे कुलपांसन ॥' १७
यच्चैभ्यो याचमानेभ्यः पित्र्यमंशं न दित्ससि ।
तच्च पाप प्रदाताऽसि भ्रष्टैश्वर्यो निपातितः ॥ १८
कृत्वा बहून्यकार्याणि पाण्डवेषु नृशंसवत् ।
मिथ्यावृत्तिरनार्यः सन्नद्य विप्रतिपद्यसे ॥ १९
मातापितृभ्यां भीष्मेण द्रोणेन विदुरेण च ।
शाम्येति मुहुरुक्तोसि न च शाम्यसि पार्थिव ॥ २०
शमे हि सुमहाँल्लाभस्तव पार्थस्य चोभयोः ।
न च रोचयसे राजन्किमन्यद्बुद्धिलाघवात् ॥ २१
न शर्म प्राप्स्यसे राजन्नुत्क्रम्य सुहृदां वचः ।
अधर्म्यमयशस्यं च क्रियते पार्थिव त्वया ॥ २२

वैशंपायन उवाच ।

एवं ब्रुवति दाशार्हे दुर्योधनममर्षणम् ।
दुःशासन इदं वाक्यमब्रवीत्कुरुसंसदि ॥ २३
न चेत्सन्धास्यसे राजन्स्वेन कामेन पाण्डवैः ।
बद्ध्वा किल त्वां दास्यन्ति कुन्तीपुत्राय कौरवाः ॥
वैकर्तनं त्वां च मां च त्रीनेतान्मनुजर्षभ ।
पाण्डवेभ्यः प्रदास्यन्ति भीष्मो द्रोणः पिता च ते ॥
भ्रातुरेतद्वचः श्रुत्वा धार्तराष्ट्रः सुयोधनः ।
क्रुद्धः प्रातिष्ठतोत्थाय महानाग इव श्वसन् ॥ २६
विदुरं धृतराष्ट्रं च महाराजं च बाह्लिकम् ।
कृपं च सोमदत्तं च भीष्मं द्रोणं जनार्दनम् ॥ २७
सर्वानेताननादृत्य दुर्मतिर्निरपत्रपः ।
अशिष्टवदमर्यादो मानी मान्यावमानिता ॥ २८

विप्रतिपद्यसे विवादं कुरुषे ॥ १९ ॥

अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

तं प्रस्थितमभिप्रेक्ष्य भ्रातरो मनुजर्षभम् ।
अनुजग्मुः सहामात्या राजानश्चापि सर्वशः॥२९
सभायामुत्थितं क्रुद्धं प्रस्थितं भ्रातृभिः सह ।
दुर्योधनमभिप्रेक्ष्य भीष्मः शान्तनवोऽब्रवीत्॥३०
धर्मार्थावभिसन्त्यज्य संरम्भं योऽनुमन्यते ।
हसन्ति व्यसने तस्य दुर्हृदो नचिरादिव ॥ ३१
दुरात्मा राजपुत्रोऽयं धार्तराष्ट्रोऽनुपायवित् ।
मिथ्याभिमानी राज्यस्य क्रोधलोभवशानुगः॥३२
कालपक्वमिदं मन्ये सर्वं क्षत्रं जनार्दन ।
सर्वे ह्यनुसृता मोहात्पार्थिवाः सह मन्त्रिभिः॥ ३३
भीष्मस्याथ वचः श्रुत्वा दाशार्हः पुष्करेक्षणः ।
भीष्मद्रोणमुखान्सर्वानभ्यभाषत वीर्यवान्॥ ३४
सर्वेषां कुरुवृद्धानां महानयमतिक्रमः ।
प्रसह्य मन्दमैश्वर्ये न नियच्छन्ति यन्नृपम् ॥ ३५
तत्र कार्यमहं मन्ये कालप्राप्तमरिन्दमाः ।
क्रियमाणे भवेच्छ्रेयस्तत्सर्वं शृणुतानघाः ॥ ३६
प्रत्यक्षमेतद्भवतां यद्वक्ष्यामि हितं वचः ।
भवतामानुकूल्येन यदि रोचेत भारताः ॥ ३७
पुत्रो वै भोजराजस्य दुराचारो ह्यनात्मवान् ।
जीवतः पितुरैश्वर्यं हृत्वा मृत्युवशं गतः ॥ ३८
उग्रसेनसुतः कंसः परित्यक्तः स बान्धवैः ।
ज्ञातीनां हितकामेन मया शस्तो महामृधे॥३९
आहुकः पुनरस्माभिर्ज्ञातिभिश्चापि सत्कृतः ।
उग्रसेनः कृतो राजा भोजराजन्यवर्धनः ॥ ४०
कंसमेकं परित्यज्य कुलार्थे सर्वयादवाः ।
संभूय सुखमेधन्ते भारतान्धकवृष्णयः ॥ ४१
अपि चाप्यवदद्राजन्परमेष्ठी प्रजापतिः ।
व्यूढे देवासुरे युद्धेऽभ्युद्यतेष्वायुधेषु च ॥ ४२
द्वैधीभूतेषु लोकेषु विनश्यत्सु च भारत ।
अब्रवीत्तु तदा देवो भगवाँल्लोकभावनः ॥ ४३
पराभविष्यन्त्यसुरा दैतेया दानवैः सह ।
आदित्या वसवो रुद्रा भविष्यन्ति दिवौकसः॥४४
देवासुरमनुष्याश्च गन्धर्वोरगराक्षसाः ।
अस्मिन्युद्धे सुसंक्रुद्धा हनिष्यन्ति परस्परम्॥ ४५
'वर्तमानं जगत्सर्वं मुहूर्तान्न भविष्यति ।'
इति मत्वाऽब्रवीद्धर्मं परमेष्ठी प्रजापतिः ।
वरुणाय प्रयच्छैतान्बद्ध्वा दैतेयदानवान् ॥ ४६
एवमुक्तस्ततो धर्मो नियोगात्परमेष्ठिनः ।
वरुणाय ददौ सर्वान्बद्ध्वा दैतेयदानवान् ॥ ४७
तान्बद्ध्वा धर्मपाशैश्च स्वैश्च पाशैर्जलेश्वरः ।
वरुणः सागरे यत्तो नित्यं रक्षति दानवान् ॥ ४८
तथा दुर्योधनं कर्णं शकुनिं चापि सौबलम् ।
बद्ध्वा दुःशासनं चापि पाण्डवेभ्यः प्रयच्छत ॥४९
त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥५०
राजन्दुर्योधनं बद्ध्वा ततः संशाम्य पाण्डवैः ।
त्वत्कृते न विनश्येयुः क्षत्रियाः क्षत्रियर्षभ॥५१

॥ इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

---

## एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

विदुरेण धृतराष्ट्राज्ञया गान्धार्याः सभां प्रत्यानयनम् ॥ १ ॥ गान्धार्या दुर्योधनं पुनः सभामानाय्य तंप्रति नीतिकथनपूर्वकं पाण्डवैः सह शमविधानम् ॥ २ ॥

वैशंपायन उवाच ।
कृष्णस्य तु वचः श्रुत्वा धृतराष्ट्रो जनेश्वरः ।
विदुरं सर्वधर्मज्ञं त्वरमाणोऽभ्यभाषत ॥ १
गच्छ तात महाप्राज्ञ गान्धारीं दीर्घदर्शिनीम् ।
आनयेह तया सार्धमनुनेष्यामि दुर्मतिम् ॥ २
यदि सा न दुरात्मानं शमयेद्दुष्टचेतसम् ।
अपि कृष्णस्य सुहृदस्तिष्ठेम वचने वयम् ॥ ३
अपि लोभाभिभूतस्य पन्थानमनुदर्शयेत् ।
दुर्बुद्धेर्दुःसहायस्य शमार्थं ब्रुवती वचः ॥ ४
अपि नो व्यसनं घोरं दुर्योधनकृतं महत् ।

शमयेच्चिररात्राय योगक्षेमवदव्ययम् ॥ ५
राज्ञस्तु वचनं श्रुत्वा विदुरो दीर्घदर्शिनीम् ।
आनयामास गान्धारीं धृतराष्ट्रस्य शासनात् ॥ ६
धृतराष्ट्र उवाच ।
एष गान्धारि पुत्रस्ते दुरात्मा शासनातिगः ।
ऐश्वर्यलोभादैश्वर्यं जीवितं च प्रहास्यति ॥ ७
अशिष्टवदमर्यादः पापैः सह दुरात्मवान् ।
सभाया निर्गतो मूढो व्यतिक्रम्य सुहृद्वचः ॥ ८
वैशंपायन उवाच ।
सा भर्तृवचनं श्रुत्वा राजपुत्री यशस्विनी ।
अन्विच्छन्ती महच्छ्रेयो गान्धारी वाक्यमब्रवीत् ९
आनायय सुतं क्षिप्रं राज्यकामुकमातुरम् ।
नहि राज्यमशिष्टेन शक्यं धर्मार्थलोपिना ।
आप्तुमाप्तं तथाऽपीदमविनीतेन सर्वथा ॥ १०
त्वं ह्येवात्र भृशं गर्ह्यो धृतराष्ट्र सुतप्रियः ।
यो जानन्पापतामस्य तत्प्रज्ञामनुवर्तसे ॥ ११
स एष काममन्युभ्यां प्रलब्धो लोभमास्थितः ।
अशक्योऽद्य त्वया राजन्विनिवर्तयितुं बलात् १२
राष्ट्रप्रदाने मूढस्य बालिशस्य दुरात्मनः ।
दुःसहायस्य लुब्धस्य धृतराष्ट्रोऽश्नुते फलम् ॥१३
कथं हि स्वजने भेदमुपेक्षेत महीपतिः ।
भिन्नं हि स्वजनेन त्वां प्रहरिष्यन्ति शत्रवः ॥ १४
या हि शक्या महाराज साम्ना भेदेन वा पुनः ।
निस्तर्तुमापदः स्वेषु दण्डं कस्तत्र पातयेत् ॥ १५
वैशंपायन उवाच ।
शासनाद्धृतराष्ट्रस्य दुर्योधनममर्षणम् ।
मातुश्च वचनात्क्षत्ता सभां प्रावेशयत्पुनः ॥ १६
स मातुर्वचनाकाङ्क्षी प्रविवेश पुनः सभाम् ।
अभिताम्रेक्षणः क्रोधान्निश्वसन्निव पन्नगः ॥ १७
तं प्रविष्टमभिप्रेक्ष्य पुत्रमुत्पथमास्थितम् ।
विगर्हमाणा गान्धारी शमार्थं वाक्यमब्रवीत् ॥ १८
दुर्योधन निबोधेदं वचनं मम पुत्रक ।
हितं ते सानुबन्धस्य तथाऽऽयत्यां सुखोदयम् ॥ १९
दुर्योधन यदाह त्वां पिता भरतसत्तम ।
भीष्मो द्रोणः कृपः क्षत्ता सुहृदां कुरु तद्वचः ॥ २०
भीष्मस्य तु पितुश्चैव मम चापचितिः कृता ॥
भवेद्द्रोणमुखानां च सुहृदां शाम्यता त्वया ॥ २१
न हि राज्यं महाप्राज्ञ स्वेन कामेन शक्यते ।
अवाप्तुं रक्षितुं वाऽपि भोक्तुं भरतसत्तम ॥ २२
न ह्यवश्येन्द्रियो राज्यमश्नीयाद्दीर्घमन्तरम् ।
विजितात्मा तु मेधावी स राज्यमभिपालयेत् ॥२३
कामक्रोधौ हि पुरुषमर्थेभ्यो व्यपकर्षतः ।
तौ तु शत्रू विनिर्जित्य राजा विजयते महीम् ॥२४
लोकेश्वर प्रभुत्वं हि महदेतद्दुरात्मभिः ।
राज्यं नामेप्सितं स्थानं न शक्यमभिरक्षितुम् ॥२५
इन्द्रियाणि महत्प्रेप्सुर्नियच्छेदर्थधर्मयोः ।
इन्द्रियैर्नियतैर्बुद्धिर्वर्धतेऽग्निरिवेन्धनैः ॥ २६
अविधेयानि हीमानि व्यापादयितुमप्यलम् ।
अविधेया इवादान्ता हयाः पथि कुसारथिम् ॥२७
अविजित्य य आत्मानममात्यान्विजिगीषते ।
अमित्रान्वाऽजितामात्यः सोऽवशः परिहीयते २८
आत्मानमेव प्रथमं द्वेष्यरूपेण योजयेत् ।
ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ॥ २९
वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यर्थं श्रीर्निषेवते ॥ ३०
क्षुद्राक्षेणेव जालेन झषावपिहितावुभौ ।
कामक्रोधौ शरीरस्थौ प्रज्ञानं तौ विलुम्पतः ॥३१
याभ्यां हि देवाः स्वर्यातुः स्वर्गस्य पिदधुर्मुखम् ।
बिभ्यतोऽनुपरागस्य कामक्रोधौ स्म वर्धितौ ॥ ३२
कामं क्रोधं च लोभं च दम्भं दर्पं च भूमिपः ।
सम्यग्विजेतुं यो वेद स महीमभिजायते ॥ ३३
सततं निग्रहे युक्त इन्द्रियाणां भवेन्नृपः ।
ईप्सन्नर्थं च धर्मं च द्विषतां च पराभवम् ॥ ३४
कामाभिभूतः क्रोधाद्वा यो मिथ्या प्रतिपद्यते ।
स्वेषु चान्येषु वा तस्य न सहाया भवन्त्युत ॥ ३५
एकीभूतैर्महाप्राज्ञैः शूरैररिनिबर्हणैः ।
पाण्डवैः पृथिवीं तात भोक्ष्यसे सहितः सुखी ॥३६

आयत्यां परिणामे ॥ १९ ॥ अपचितिः पूजा ॥२१॥ दीर्घमन्तरं चिरकालम् ॥२३॥ महद्राज्यं ।महद्राज्यविशालयोरिति विश्वः ॥२६॥ क्षुद्राक्षेण सूक्ष्मच्छिद्रेण ॥ ३१ ॥ याभ्यां पिदधुः तौ कामक्रोधावित्यध्याहारेण योजना ॥ ३२ ॥ अभिजायते शास्ति ॥३३॥

यथा भीष्मः शान्तनवो द्रोणश्चापि महारथः ।
आहतुस्तात तत्सत्यमजेयौ कृष्णपाण्डवौ ॥ ३७
प्रपद्यस्व महाबाहुं कृष्णमक्लिष्टकारिणम् ।
प्रसन्नो हि सुखाय स्यादुभयोरेव केशवः ॥ ३८
सुहृदामर्थकामानां यो न तिष्ठति शासने ।
प्राज्ञानां कृतविद्यानां स नरः शत्रुनन्दनः ॥३९
न युद्धे तात कल्याणं न धर्मार्थौ कुतः सुखम् ।
न चापि विजयो नित्यं मा युद्धे चेत आधिथाः ४०
भीष्मेण हि महाप्राज्ञ पित्रा ते बाह्लिकेन च ।
दत्तोंऽशः पाण्डुपुत्राणां भेदाद्भीतैररिन्दम ॥ ४१
तस्य चैतत्प्रदानस्य फलमद्यानुपश्यसि ।
यद्भुङ्क्षे पृथिवीं कृत्स्नां शूरैर्निहतकण्टकाम् ॥ ४२
प्रयच्छ पाण्डुपुत्राणां यथोचितमरिन्दम ।
यदीच्छसि सहामात्यो भोक्तुमर्धं प्रदीयताम् ॥ ४३
अलमर्धं पृथिव्यास्ते सहामात्यस्य जीवितुम् ।
सुहृदां वचने तिष्ठन्यशः प्राप्स्यसि भारत ॥ ४४
श्रीमद्भिरात्मवद्भिस्तैर्बुद्धिमद्भिर्जितेन्द्रियैः ।
पाण्डवैर्विग्रहस्तात भ्रंशयेन्महतः सुखात् ॥ ४५
निगृह्य सुहृदां मन्युं शाधि राज्यं यथोचितम् ।
स्वमंशं पाण्डुपुत्रेभ्यः प्रदाय भरतर्षभ ॥ ४६
अलमङ्ग निकारोऽयं त्रयोदशसमाः कृतः ।
शमयैनं महाप्राज्ञ कामक्रोधसमेधितम् ॥ ४७
न चैष शक्तः पार्थानां यस्त्वदर्थमभीप्सति ।
सूतपुत्रो दृढक्रोधो भ्राता दुःशासनश्च ते ॥ ४८
भीष्मे द्रोणे कृपे कर्णे भीमसेने धनञ्जये ।
धृष्टद्युम्ने च संक्रुद्धे न स्युः सर्वाः प्रजा ध्रुवम् ॥४९
अमर्षवशमापन्नो मा कुरूंस्तात जीघनः ।
एषा हि पृथिवी कृत्स्ना मा गमत्त्वत्कृते वधम् ॥५०
यच्च त्वं मन्यसे मूढ भीष्मद्रोणकृपादयः ।
योत्स्यन्ते सर्वशक्त्येति नैतदद्योपपद्यते ॥ ५१
समं हि राज्यं प्रीतिश्च स्थानं हि विदितात्मनाम् ।
पाण्डवेष्वथ युष्मासु धर्मस्त्वभ्यधिकस्ततः ॥५२
राजपिण्डभयादेते यदि हास्यन्ति जीवितम् ।
न हि शक्ष्यन्ति राजानं युधिष्ठिरमुदीक्षितुम् ॥ ५३
न लोभादर्थसंपत्तिर्नराणामिह दृश्यते ।
तदलं तात लोभेन प्रशाम्य भरतर्षभ ॥ ५४

॥ इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

## त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

मातृवाक्यमनादृत्य निर्गतेन दुर्योधनेन कर्णादिभिः सहालोच्य कृष्णबन्धननिर्धारणम् ॥ १ ॥ इङ्गितज्ञेन सात्यकिना कृष्णादिषु तन्निवेदनम् ॥ २ ॥ धृतराष्ट्रेण पुनर्दुर्योधनमानाय्य कृष्णस्य दुर्ग्रहत्वनिरूपणम् ॥ ३ ॥ विदुरेण संगृह्य कृष्णचरित्रनिरूपणपूर्वकं दुर्योधनगर्हणम् ॥ ४ ॥

वैशंपायन उवाच ।
तत्तु वाक्यमनादृत्य सोऽर्थवन्मातृभाषितम् ।
पुनः प्रतस्थे संरम्भात्सकाशमकृतात्मनाम् ॥ १
ततः सभाया निर्गम्य मन्त्रयामास कौरवः ।
सौबलेन मताक्षेण राज्ञा शकुनिना सह ॥ २
'दुर्योधनं धार्तराष्ट्रं कर्ण दुःशासनोऽब्रवीत् ।
नोचेत्सन्धास्यसे राजन्स्वेन कामेन पाण्डवैः ।
बद्ध्वैव त्वां प्रदास्यन्ति पाण्डुपुत्राय भारत ॥ ३
वैकर्तनं त्वां च मां च त्रीनेतान्भरतर्षभ ।
पाण्डवेभ्यः प्रदास्यन्ति भीष्मद्रोणौ पिता च ते ॥४
दुःशासनस्य तद्वाक्यं निशम्य भरतर्षभ ।
दुर्योधनो धार्तराष्ट्रो निश्वस्य प्रहसन्निव ॥ ५
एकान्तमुपसृत्येह मन्त्रं पुनरमन्त्रयत् ।
सौबलेन मताक्षेण राज्ञा शकुनिना सह ॥' ६
दुर्योधनस्य कर्णस्य शकुनेः सौबलस्य च ।
दुःशासनचतुर्थानामिदमासीद्विचेष्टितम् ॥ ७
पुराऽयमस्मान्गृह्णाति क्षिप्रकारी जनार्दनः ।
सहितो धृतराष्ट्रेण राज्ञा शान्तनवेन च ॥ ८

निकारः अपकारः ॥ ४७ ॥

वयमेव हृषीकेशं निगृह्णीम बलादिव ।
प्रसह्य पुरुषव्याघ्रमिन्द्रो वैरोचनिं यथा ॥ ९
श्रुत्वा गृहीतं वार्ष्णेयं पाण्डवा हतचेतसः ।
निरुत्साहा भविष्यन्ति भग्नदंष्ट्रा इवोरगाः ॥१०
अयं ह्येषां महाबाहुः सर्वेषां शर्म वर्म च ।
अस्मिन्गृहीते वरदे ऋषभे सर्वसात्वताम् ।
निरुद्यमा भविष्यन्ति पाण्डवाः सोमकैः सह ११
तस्माद्वयमिहैवैकं केशवं क्षिप्रकारिणम् ।
क्रोशतो धृतराष्ट्रस्य बद्ध्वा योत्स्यामहे रिपून् ॥१२
वैशंपायन उवाच ।
तेषां पापमभिप्रायं पापानां दुष्टचेतसाम् ।
इङ्गितज्ञः कविः क्षिप्रमन्वबुध्यत सात्यकिः ॥१३
तदर्थमभिनिष्क्रम्य हार्दिक्येन सहास्थितः ।
अब्रवीत्कृतवर्माणं क्षिप्रं योजय वाहिनीम् ॥ १४
व्यूढानीकः सभाद्वारमुपतिष्ठस्व दंशितः ।
यावदाख्याम्यहं चैतत्कृष्णायाक्लिष्टकारिणे ॥१५
स प्रविश्य सभां वीरः सिंहो गिरिगुहामिव ।
आचष्ट तमभिप्रायं केशवाय महात्मने ॥ १६
धृतराष्ट्रं ततश्चैव विदुरं चान्वभाषत ।
तेषामेतमभिप्रायमाचचक्षे स्मयन्निव ॥ १७
धर्मादर्थाच्च कामाच्च कर्म साधुविगर्हितम् ।
मन्दाः कर्तुमिहेच्छन्ति न चावाप्यं कथंचन १८
पुरा विकुर्वते मूढाः पापात्मानः समागताः ।
धर्षिताः काममन्युभ्यां क्रोधलोभवशानुगाः १९
इमं हि पुण्डरीकाक्षं जिघृक्षन्त्यल्पचेतसः ।
पटेनाग्निं प्रज्वलितं यथा बाला यथा जडाः २०
सात्यकेस्तद्वचः श्रुत्वा विदुरो दीर्घदर्शिवान् ।
धृतराष्ट्रं महाबाहुमब्रवीत्कुरुसंसदि ॥ २१
राजन्परीतकालास्ते पुत्राः सर्वे परन्तप ।
अशक्यमयशस्यं च कर्तुं कर्म समुद्यताः ॥ २२
इमं हि पुण्डरीकाक्षमभिभूय प्रसह्य च ।
निग्रहीतुं किलेच्छन्ति सहिता वासवानुजम् ॥२३
इमं पुरुषशार्दूलमप्रधृष्यं दुरासदम् ।
आसाद्य नभविष्यन्ति पतङ्गा इव पावकम् ॥२४
अयमिच्छन्हि तान्सर्वान्युध्यमानाञ्जनार्दनः ।
सिंहो नागानिव क्रुद्धो गमयेद्यमसादनम् ॥ २५
न त्वयं निन्दितं कर्म कुर्यात्पापं कथंचन ।
न च धर्मादपक्रामेदच्युतः पुरुषोत्तमः ॥ २६
'यथा वाराणसी दग्धा साश्वा सरथकुञ्जरा ।
सानुबन्धस्तु कृष्णेन काशीनामृषभो हतः ॥ २७
तथा नागपुरं दग्ध्वा शङ्खचक्रगदाधरः ।
स्वयं कालेश्वरो भूत्वा नाशयिष्यति कौरवान् २८
पारिजातहरं ह्येनमेकं यदुसुखावहम् ।
नाभ्यवर्तत संरब्धो वृत्रहा वसुभिः सह ॥ २९
प्राप्य निर्मोचने पाशान्पट्सहस्रांस्तरस्विनः ।
हतास्ते वासुदेवेन ह्युपसङ्क्रम्य कौरवान् ॥ ३०
द्वारमासाद्य सौभस्य विधूय गदया गिरिम् ।
द्युमत्सेनः सहामात्यः कृष्णेन विनिपातितः ३१
शेषवत्त्वात्कुरूणां तु धर्मापेक्षी तथाऽच्युतः ।
क्षमते पुण्डरीकाक्षः शक्तः सन्पापकर्मणाम् ३२
एते हि यदि गोविन्दमिच्छन्ति सह राजभिः ।
अद्यैवातिथयः सर्वे भविष्यन्ति यमस्य ते ॥ ३३
यथा वायोस्तृणाग्राणि वशं यान्ति बलीयसः ।
तथा चक्रभृतः सर्वे वशमेष्यन्ति कौरवाः ॥ ३४
वैशंपायन उवाच ।'
विदुरेणैवमुक्ते तु केशवो वाक्यमब्रवीत् ।
धृतराष्ट्रमभिप्रेक्ष्य सुहृदां शृण्वतां मिथः ॥ ३५
राजन्नेते यदि क्रुद्धा मां निगृह्णीयुरोजसा ।
एते वा मामहं वैनाननुजानीहि पार्थिव ॥ ३६
एतान्हि सर्वान्संरब्धान्नियन्तुमहमुत्सहे ।
न त्वहं निन्दितं कर्म कुर्यां पापं कथंचन ॥ ३७
पाण्डवार्थे हि लुभ्यन्तः स्वार्थान्हास्यन्ति ते सुताः ।
एते चेदेवमिच्छन्ति कृतकार्यो युधिष्ठिरः ॥ ३८
अद्यैव ह्यहमेनांश्च ये चैनाननु भारत ।
निगृह्य राजन्पार्थेभ्यो दद्यां किं दुष्कृतं भवेत् ३९
'एष मे निश्चयो राजन्यद्येषोऽस्य विनिश्चयः ।
नर्दन्तु सहिताः शङ्खाः पणवानकनिस्वनैः ॥४०

---

वैरोचनिं बलिम् ॥ ९ ॥ कर्म दूतनिग्रहाख्यम् ॥ १८ ॥ पाण्डवार्थे पाण्डवधने ॥ ३८ ॥

अनायासेन पार्थानां वर्ततां च शिवं महत् ।
निगृह्य राजन्पार्थेभ्यो दद्यां चेत्सुकृतं भवेत् ॥ ४१
इदं तु न प्रवर्तेयं निन्दितं कर्म भारत ।
सन्निधौ ते महाराज क्रोधजं पापबुद्धिजम् ॥ ४२
एष दुर्योधनो राजन्यथेच्छति तथाऽस्तु तत् ।
अहं तु सर्वांस्तनयाननुजानामि ते नृप ॥ ४३
एतच्छ्रुत्वा तु विदुरं धृतराष्ट्रोऽभ्यभाषत ।
क्षिप्रमानय तं पापं राज्यलुब्धं सुयोधनम् ॥ ४४
सहमित्रं सहामात्यं ससोदर्यं सहानुगम् ।
शक्नुयां यदि पन्थानमवतारयितुं पुनः ॥ ४५
ततो दुर्योधनं क्षत्ता पुनः प्रावेशयत्सभाम् ।
अकामं भ्रातृभिः सार्धं राजभिः परिवारितम् ॥ ४६
अथ दुर्योधनं राजा धृतराष्ट्रोऽभ्यभाषत ।
कर्णदुःशासनाभ्यां च राजभिश्चापि संवृतम् ॥ ४७
नृशंस पापभूयिष्ठ क्षुद्रकर्मसहायवान् ।
पापैः सहायैः संहत्य पापं कर्म चिकीर्षसि ॥ ४८
अशक्यमयशस्यं च सद्भिश्चापि विगर्हितम् ।
यथा त्वादृशको मूढो व्यवसेत्कुलपांसनः ॥ ४९
त्वमिमं पुण्डरीकाक्षमप्रधृष्यं दुरासदम् ।
पापैः सहायैः संहत्य निग्रहीतुं किलेच्छसि ॥ ५०
यो न शक्यो बलात्कर्तुं देवैरपि सवासवैः ।
तं त्वं प्रार्थयसे मन्द बालश्चन्द्रमसं यथा ॥ ५१
देवैर्मनुष्यैर्गन्धर्वैरसुरैरुरगैश्च यः ।
न सोढुं समरे शक्यस्तं न बुध्यसि केशवम् ॥ ५२
दुर्ग्राह्यः पाणिना वायुर्दुस्पर्शः पाणिना शशी ।
दुर्धरा पृथिवी मूर्ध्ना दुर्ग्राह्यः केशवो बलात् ॥ ५३
इत्युक्ते धृतराष्ट्रेण क्षत्ताऽपि विदुरोऽब्रवीत् ।
दुर्योधनमभिप्रेक्ष्य धार्तराष्ट्रममर्षणम् ॥ ५४
दुर्योधन निबोधेदं वचनं मम सांप्रतम् ।
सौभद्वारे वानरेन्द्रो द्विविदो नाम नामतः ।
शिलावर्षेण महता छादयामास केशवम् ॥ ५५
ग्रहीतुकामो विक्रम्य सर्वयत्नेन माधवम् ।
ग्रहीतुं नाशकच्चैनं तं त्वं प्रार्थयसे बलात् ॥ ५६
प्राग्ज्योतिषगतं शौरिं नरकः सह दानवैः ।
ग्रहीतुं नाशकत्तत्र तं त्वं प्रार्थयसे बलात् ॥ ५७
अनेकयुगवर्षायुर्निहत्य नरकं मृधे ।
नीत्वा कन्यासहस्राणि उपयेमे यथाविधि ॥ ५८
निर्मोचने षट्सहस्राः पाशैर्बद्धा महासुराः ।
ग्रहीतुं नाशकंश्चैनं तं त्वं प्रार्थयसे बलात् ॥ ५९
अनेन हि हता बाल्ये पूतना शिशुना तदा ।
गोवर्धनो धारितश्च गवार्थे भरतर्षभ ॥ ६०
अरिष्टो धेनुकश्चैव चाणूरश्च महाबलः ।
अश्वराजश्च निहतः कंसश्चारिष्टमाचरन् ॥ ६१
जरासन्धश्च वक्रश्च शिशुपालश्च वीर्यवान् ।
बाणश्च निहतः सङ्ख्ये राजानश्च निषूदिताः ॥ ६२
वरुणो निर्जितो राजा पावकश्चामितौजसा ।
पारिजातं च हरता जितः साक्षाच्छचीपतिः ॥ ६३
एकार्णवे च स्वपता निहतौ मधुकैटभौ ।
जन्मान्तरमुपागम्य हयग्रीवस्तथा हतः ॥ ६४
अयं कर्ता न क्रियते कारणं चापि पौरुषे ।
यद्यदिच्छेदयं शौरिस्तत्तत्कुर्यादयत्नतः ॥ ६५
तं न बुध्यसि गोविन्दं घोरविक्रममच्युतम् ।
आशीविषमिव क्रुद्धं तेजोराशिमनिन्दितम् ॥ ६६
प्रधर्षयन्महाबाहुं कृष्णमक्लिष्टकारिणम् ।
पतङ्गोऽग्निमिवासाद्य सामात्यो नभविष्यसि ॥ ६७

॥ इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

---

इदं तु कर्म कर्तुमिति शेषः ॥ ४२ ॥ निर्मोचने नगरविशेषे ॥ ५९ ॥ त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

## एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

श्रीकृष्णेन सभायां विश्वरूपप्रदर्शनम् ॥ १ ॥ कृष्णप्रसादाल्लब्धचक्षुषा धृतराष्ट्रेण कृष्णं दृष्टवता चक्षुषा इतरेषामदिदृक्षया कृष्णवरात्पुनः स्वचक्षुषोरन्तर्धानाधिगमः ॥ २ ॥ कृष्णेन तद्रूपोपसंहारपूर्वकं पूर्वरूपं स्वीकृत्य रथाधिरोहणेन कुन्तीसमीपगमनम् ॥ ३ ॥

वैशंपायन उवाच ।
विदुरेणैवमुक्तस्तु केशवः शत्रुपूगहा ।
दुर्योधनं धार्तराष्ट्रमभ्यभाषत वीर्यवान् ॥ १
एकोऽहमिति यन्मोहान्मन्यसे मां सुयोधन ।
परिभूय सुदुर्बुद्धे ग्रहीतुं मां चिकीर्षसि ॥ २
इहैव पाण्डवाः सर्वे तथैवान्धकवृष्णयः ।
इहादित्याश्च रुद्राश्च वसवश्च महर्षिभिः ॥ ३
एवमुक्त्वा जहासोच्चैः केशवः परवीरहा ।
तस्य संस्मयतः शौरेर्विद्युद्रूपा महात्मनः ।
'युगपच्च विनिष्पेतुः साक्षात्सर्वास्तु देवताः ॥' ४
अङ्गुष्ठमात्रास्त्रिदशा बभूवुः पावकार्चिषः ।
तस्य ब्रह्मा ललाटस्थो रुद्रो वक्षसि चाभवत् ॥५
लोकपाला भुजेष्वासन्नग्निरास्यादजायत ।
आदित्याश्चैव साध्याश्च वसवोऽथाश्विनावपि ॥६
मरुतश्च सहेन्द्रेण विश्वेदेवास्तथैव च ।
बभूवुश्चैव यक्षाश्च गन्धर्वोरगराक्षसाः ॥ ७
प्रादुरास्तां तथा दोर्भ्यां सङ्कर्षणधनञ्जयौ ।
दक्षिणेऽथार्जुनो धन्वी हली रामश्च सव्यतः ॥८
भीमो युधिष्ठिरश्चैव माद्रीपुत्रौ च पृष्ठतः ।
अन्धका वृष्णयश्चैव प्रद्युम्नप्रमुखास्ततः ॥ ९
अग्रे बभूवुः कृष्णस्य समुद्यतमहायुधाः ।
शङ्खचक्रगदाशक्तिशार्ङ्गलाङ्गलनन्दकाः ॥ १०
अदृश्यन्तोद्यतान्येव सर्वप्रहरणानि च ।
नानाबाहुषु कृष्णस्य दीप्यमानानि सर्वशः ॥ ११
नेत्राभ्यां नासिकाभ्यां च श्रोत्राभ्यां च समन्ततः ।
प्रादुरासन्महारौद्राः सधूमाः पावकार्चिषः ॥१२
रोमकूपेषु च तथा सूर्यस्येव मरीचयः ।
'सहस्रचरणः श्रीमाञ्शतबाहुः सहस्रदृक् ॥ १३
तस्य वै नागलोकश्च गुल्फाधो ददृशे तदा ।
चन्द्रसूर्यौ तथा नेत्रे ग्रहा वै सर्वतः स्थिताः ॥ १४
ऊर्ध्वलोकाश्च सर्वेऽपि कुक्षौ तस्य व्यवस्थिताः ।
सरितः सागराश्चैव स्वेदस्तस्य महात्मनः ॥ १५
अस्थीनि पर्वताः सर्वे वृक्षा रोमाणि तस्य हि ।
निमेषणं रात्र्यहनी जिह्वायां शारदा तथा ॥' १६
तं दृष्ट्वा घोरमात्मानं केशवस्य महात्मनः ।
न्यमीलयन्त नेत्राणि राजानस्त्रस्तचेतसः ॥ १७
ऋते द्रोणं च भीष्मं च विदुरं च महामतिम् ।
संजयं धृतराष्ट्रं च ऋषींश्चैव तपोधनान् ॥ १८
प्रादात्तेषां स भगवान्दिव्यं चक्षुर्जनार्दनः ॥ १९
'धृतराष्ट्राय प्रददौ भगवान्दिव्यचक्षुषी ।
ददर्श परमं रूपं धृतराष्ट्रोऽम्बिकासुतः ॥ २०
ततो देवाः सगन्धर्वाः किन्नराश्च महोरगाः ।
ऋषयश्च महाभागा लोकपालैः समन्विताः ।
प्रणम्य शिरसा देवं तुष्टुवुः प्राञ्जलिस्थिताः ॥ २१
क्रोधं प्रभो संहर संहर स्वं
रूपं च यद्दर्शितमात्मसंस्थम् ।
यावत्त्विमे देवगणैः समेता
लोकाः समस्ता भुवि नाशमीयुः ॥ २२
त्वं च कर्ता विकर्ता च त्वमेव परिरक्षसे ।
त्वया व्याप्तमिदं सर्वं जगत्स्थावरजङ्गमम् ॥ २३
कियन्मात्रा महीपालाः किंवीर्याः किंपराक्रमाः ।
तेषामर्थे महाबाहो दिव्यं रूपं प्रदर्शितवान् ।
एवमुच्चारिता वाचः सह देवैर्विभुं तदा ॥' २४
तद्दृष्ट्वा महदाश्चर्यं माधवस्य सभातले ।
देवदुन्दुभयो नेदुः पुष्पवर्षं पपात च ॥ २५
धृतराष्ट्र उवाच ।
त्वमेव पुण्डरीकाक्ष सर्वस्य जगतो हितः ।
तस्मान्मे यादवश्रेष्ठ प्रसादं कर्तुमर्हसि ॥ २६
भगवन्मम नेत्राभ्यामन्तर्धानं वृणे पुनः ।
भवन्तं दृष्टवानस्मि नान्यं द्रष्टुमिहोत्सहे ॥ २७

ततोऽब्रवीन्महाबाहुर्धृतराष्ट्रं जनार्दनः ।
अदृश्यमाने नेत्रे द्वे भवेतां कुरुनन्दन ॥ २८
तत्राद्भुतं महाराज धृतराष्ट्रश्च चक्षुषी ।
लब्धवान्वासुदेवाच्च विश्वरूपदिदृक्षया ॥ २९
लब्धचक्षुषमासीनं धृतराष्ट्रं नराधिपाः ।
विस्मिता ऋषिभिः सार्धं तुष्टुवुर्मधुसूदनम् ॥ ३०
चचाल च मही कृत्स्ना सागरश्चापि चुक्षुभे ।
विस्मयं परमं जग्मुः पार्थिवा भरतर्षभ ॥ ३१
ततः स पुरुषव्याघ्रः सञ्जहार वपुः स्वकम् ।
तां दिव्यामद्भुतां चित्रामृद्धिमत्तामरिन्दमः ॥३२
ततः सात्यकिमादाय पाणौ विदुरमेव च ।
ऋषिभिस्तैरनुज्ञातो निर्ययौ मधुसूदनः ॥ ३३
ऋषयोऽन्तर्हिता जग्मुस्ततस्ते नारदादयः ।
तस्मिन्कोलाहले वृत्ते तदद्भुतमिवाभवत् ॥ ३४
तं प्रस्थितमभिप्रेक्ष्य कौरवाः सह राजभिः ।
अनुजग्मुर्नरव्याघ्रं देवा इव शतक्रतुम् ॥ ३५
अचिन्तयन्नमेयात्मा सर्वं तद्राजमण्डलम् ।
निश्चक्राम ततः शौरिः सधूम इव पावकः ॥३६
ततो रथेन शुभ्रेण महता किङ्किणीकिना ।
हेमजालविचित्रेण लघुना मेघनादिना ॥ ३७
सूपस्करेण शुभ्रेण वैयाघ्रेण वरूथिना ।
शैब्यसुग्रीवयुक्तेन प्रत्यदृश्यत दारुकः ॥ ३८
तथैव रथमास्थाय कृतवर्मा महारथः ।
वृष्णीनां संमतो वीरो हार्दिक्यः समदृश्यत ३९
उपस्थितरथं शौरिं प्रयास्यन्तमरिन्दमम् ।
धृतराष्ट्रो महाराजः पुनरेवाभ्यभाषत ॥ ४०
यावद्बलं मे पुत्रेषु पश्यतस्ते जनार्दन ।
प्रत्यक्षं ते न ते किंचित्परोक्षं शत्रुकर्शन ॥ ४१
कुरूणां शममिच्छन्तं यतमानं च केशव ।
विदित्वैतामवस्थां मे नातिशङ्कितुमर्हसि ॥ ४२
न मे पापोऽस्त्यभिप्रायः पाण्डवान्प्रति केशव ।
ज्ञातमेव हितं वाक्यं यन्मयोक्तः सुयोधनः ॥४३
जानन्ति कुरवः सर्वे राजानश्चैव पार्थिवाः ।
शमे प्रयतमानं मां सर्वयत्नेन माधव ॥ ४४
वैशंपायन उवाच ।
ततोऽब्रवीन्महाबाहुर्धृतराष्ट्रं जनार्दनः ।
द्रोणं पितामहं भीष्मं क्षत्तारं बाह्लिकं कृपम् ४५
प्रत्यक्षमेतद्भवतां यद्वृत्तं कुरुसंसदि ।
यथा चाशिष्टवन्मन्दो रोषादद्य समुत्थितः ॥४६
वदत्यनीशमात्मानं धृतराष्ट्रो महीपतिः ।
आपृच्छे भवतः सर्वान्गमिष्यामि युधिष्ठिरम् ॥ ४७
आमन्त्र्य प्रस्थितं शौरिं रथस्थं पुरुषर्षभ ।
अनुजग्मुर्महेष्वासाः प्रवीरा भरतर्षभाः ॥ ४८
भीष्मो द्रोणः कृपः क्षत्ता धृतराष्ट्रोऽथ बाह्लिकः ।
अश्वत्थामा विकर्णश्च युयुत्सुश्च महारथः ॥ ४९
ततो रथेन शुभ्रेण महता किङ्किणीकिना ।
कुरूणां पश्यतां द्रष्टुं स्वसारं स पितुर्ययौ ॥ ५०

॥ इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

## द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

कृष्णेन कुन्तींप्रति सप्रणामं सभावृत्तान्तकथनम् ॥ १ ॥ कुन्त्या कृष्णचोदनया तस्मिन् युधिष्ठिराय संदेशप्रेषणम् ॥ २ ॥

वैशंपायन उवाच ।
प्रविश्याथ गृहं तस्याश्चरणावभिवाद्य च ।
आचख्यौ तत्समासेन यद्वृत्तं कुरुसंसदि ॥ १
वासुदेव उवाच ।
उक्तं बहुविधं वाक्यं ग्रहणीयं सहेतुकम् ।
ऋषिभिश्चैव च मया न चासौ तद्गृहीतवान् ॥ २
कालपक्वमिदं सर्वं सुयोधनवशानुगम् ।
'सर्वक्षत्रं क्षणेनैव दह्यते पार्थवह्निना ।'

अदृश्यमाने दर्शनशक्तिरहिते ॥ २८ ॥ वरूथिना रथगुप्तिमता ॥ ३८ ॥ मन्दो दुर्योधनः ॥ ४६ ॥

एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

आपृच्छे भवतीं शीघ्रं प्रयास्ये पाण्डवान्प्रति॥ ३
किं वाच्याः पाण्डवेयास्ते भवत्या वचनान्मया।
तद्ब्रूहि त्वं महाप्राज्ञे शुश्रूषे वचनं तव॥ ४
कुन्त्युवाच।
ब्रूयाः केशव राजानं धर्मात्मानं युधिष्ठिरम्।
भूयांस्ते हीयते धर्मो मा पुत्रक वृथा कृथाः॥५
श्रोत्रियस्येव ते राजन्मन्दकस्याविपश्चितः।
अनुवाकहता बुद्धिर्धर्ममेवैकमीक्षते॥ ६
अङ्गावेक्षस्व धर्मं त्वं यथा सृष्टः स्वयंभुवा।
बाहुभ्यां क्षत्रियाः सृष्टा बाहुवीर्योपजीविनः॥ ७
क्रूराय कर्मणे नित्यं प्रजानां परिपालने।
शृणु चात्रोपमामेकां या वृद्धेभ्यः श्रुता मया॥ ८
मुचुकुन्दस्य राजर्षेरददत्पृथिवीमिमाम्।
पुरा वैश्रवणः प्रीतो न चासौ तद्गृहीतवान्॥ ९
बाहुवीर्यार्जितं राज्यमश्नीयामिति कामये।
ततो वैश्रवणः प्रीतो विस्मितः समपद्यत॥ १०
मुचुकुन्दस्ततो राजा सोऽन्वशासद्वसुन्धराम्।
बाहुवीर्यार्जितां सम्यक् क्षत्रधर्ममनुव्रतः॥ ११
यं हि धर्मं चरन्तीह प्रजा राज्ञा सुरक्षिताः।
चतुर्थं तस्य धर्मस्य राजा विन्देत भारत॥ १२
राजा चरति चेद्धर्मं देवत्वायैव कल्पते।
स चेदधर्मं चरति नरकायैव गच्छति॥ १३
दण्डनीतिः स्वधर्मेण चातुर्वर्ण्यं नियच्छति।
प्रयुक्ता स्वामिना सम्यगधर्मेभ्यो नियच्छति॥ १४
दण्डनीत्यां यदा राजा सम्यक्कार्त्स्न्येन वर्तते।
तदा कृतयुगं नाम कालः श्रेष्ठः प्रवर्तते॥ १५
कालो वा कारणं राज्ञो राजा वा कालकारणम्।
इति ते संशयो मा भूद्राजा कालस्य कारणम्॥ १६
राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च।
युगस्य च चतुर्थस्य राजा भवति कारणम्॥ १७
कृतस्य करणाद्राजा स्वर्गमत्यन्तमश्नुते।
त्रेतायाः करणाद्राजा स्वर्गं नात्यन्तमश्नुते॥ १८
प्रवर्तनाद्द्वापरस्य यथाभागमुपाश्नुते।
कलेः प्रवर्तनाद्राजा पापमत्यन्तमश्नुते॥ १९
ततो वसति दुष्कर्मा नरके शाश्वतीः समाः।
राजदोषेण हि जगत्स्पृश्यते जगतः स च॥ २०
राजधर्मानवेक्षस्व पितृपैतामहोचितान्।
नैतद्राजर्षिवृत्तं हि यत्र त्वं स्थातुमिच्छसि॥ २१
न हि वैक्लव्यसंसृष्ट आनृशंस्ये व्यवस्थितः।
प्रजापालनसंभूतं फलं किंचन लब्धवान्॥ २२
न ह्येतामाशिषं पाण्डुर्न चाहं न पितामहः।
प्रयुक्तवन्तः पूर्वं ते यया चरसि मेधया॥ २३
यज्ञो दानं तपः शौर्यं प्रज्ञा सन्तानमेव च।
माहात्म्यं बलमोजश्च नित्यमाशंसितं मया॥२४
नित्यं स्वाहा स्वधा नित्यं दद्युर्मानुषदेवताः।
दीर्घमायुर्धनं पुत्रान्सम्यगाराधिताः शुभाः॥२५
पुत्रेष्वाशासते नित्यं पितरो दैवतानि च।
दानमध्ययनं यज्ञः प्रजानां परिपालनम्॥ २६
एतद्धर्ममधर्मं वा जन्मनैवाभ्यजायथाः।
ते तु वैद्याः कुले जाता अवृत्त्या तात पीडिताः॥२७
यत्र दानपतिं शूरं क्षुधिताः पृथिवीचराः।
प्राप्य तुष्टाः प्रतिष्ठन्ते धर्मः कोऽभ्यधिकस्ततः॥ २८
दानेनान्यं बलेनान्यं तथा सूनृतयाऽपरम्।
सर्वतः प्रतिगृह्णीयाद्राज्यं प्राप्येह धार्मिकः॥ २९
ब्राह्मणः प्रचरेद्भैक्षं क्षत्रियः परिपालयेत्।
वैश्यो धनार्जनं कुर्याच्छूद्रः परिचरेच्च तान्॥ ३०
भैक्षं विप्रतिषिद्धं ते कृषिर्नैवोपपद्यते।
क्षत्रियोऽसि क्षतात्राता बाहुवीर्योपजीविता॥३१
पित्र्यमंशं महाबाहो निमग्नं पुनरुद्धर।
साम्ना भेदेन दानेन दण्डेनाथ नयेन वा॥ ३२

---

भूयान् पृथ्वीपालनजो धर्मः॥ ५॥ श्रोत्रियस्य वेदाध्यायिनः। मन्दकस्य अर्थज्ञानशून्यस्य। अनुवाकेन अत्यन्तं वेदाक्षरावृत्त्या हता नष्टा॥ ६॥ जगतः दोषेण सच राजा स्पृश्यते॥ २०॥ फलं न लब्धवान् असीति शेषः॥ २२॥ नित्यमिति। मानुषाश्च देवताश्च सम्यगाराधिताः सत्यः इह लोके आयुरादीनि परलोकसाधनानि स्वधादीनि सत्कर्माणि च दद्युः॥ २५॥ एतत् मद्वाक्यं धर्मं धर्मयुक्तं अधर्मं वा जन्मनैव स्वभावत एव अभ्यजायथाः अभिजानीषे। हे कृष्ण ते तु पाण्डवास्तु वैद्याः विद्यावन्तः॥ २७॥ राज्य राजत्वं क्षत्रियत्वमित्यर्थः॥२९॥ द्वात्रिंशदधिकशततमोऽध्यायः॥ १३२॥

इतो दुःखतरं किं नु यदहं दीनबान्धवा ।
परपिण्डमुदीक्षे वै त्वां सूत्वा मित्रनन्दन ॥ ३३
युध्यस्व राजधर्मेण मा निमज्जीः पितामहान् ।
मा गमः क्षीणपुण्यस्त्वं सानुजः पापिकां गतिं॥३४

॥ इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

## त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

कुन्त्या युधिष्ठिरबोधनाय कृष्णंप्रति विदुलोपाख्यानकथनम् ॥ १ ॥

कुन्त्युवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
विदुलायाश्च संवादं पुत्रस्य च परन्तप ॥ १
ततः श्रेयश्च भूयश्च यथावद्वक्तुमर्हसि ।
यशस्विनी मन्युमती कुले जाता विभावरी ॥ २
क्षत्रधर्मरता दान्ता विदुला दीर्घदर्शिनी ।
विश्रुता राजसंसत्सु श्रुतवाक्या बहुश्रुता ॥ ३
विदुला नाम राजन्या जगर्हे पुत्रमौरसम् ।
निर्जितं सिन्धुराजेन शयानं दीनचेतसम् ॥ ४
विदुलोवाच ।
अनन्दन मया जात द्विषतां हर्षवर्धन ।
न मया त्वं न पित्रा च जातः क्वाभ्यागतोह्यसि ॥५
निर्मन्युश्चाप्यसङ्ख्येयः पुरुषः क्लीवसाधनः ।
यावज्जीवं निराशोऽसि कल्याणाय धुरं वह ॥ ६
माऽऽत्मानमवमन्यस्व मैनमल्पेन बीभरः ।
मनः कृत्वा सुकल्याणं मा भैस्त्वं प्रतिसंहर॥ ७
उत्तिष्ठ हे कापुरुष मा शेष्वैवं पराजितः ।
अमित्रान्नन्दयन्सर्वान्निर्मानो बन्धुशोकदः ॥ ८
सुपूरा वै कुनदिका सुपूरो मूषिकाञ्जलिः ।
सुसंतोषः कापुरुषः स्वल्पकेनैव तुष्यति ॥ ९
अप्यहेरारुजन्दंष्ट्रामाश्वेव निधनं व्रज ।
अपि वा संशयं प्राप्य जीवितेऽपि पराक्रमेः ॥ १०
अप्यरेः श्येनवच्छिद्रं पश्येस्त्वं विपरिक्रमन् ।
विवदन्वाऽथवा तूष्णीं व्योम्नीवापरिशङ्कितः ॥११
त्वमेवं प्रेतवच्छेषे कस्माद्वज्रहतो यथा ।
उत्तिष्ठ हे कापुरुष मा स्वाप्सीः शत्रुनिर्जितः ॥१२
माऽस्तं गमस्त्वं कृपणो विश्रूयस्व स्वकर्मणा ।
मा मध्ये मा जघन्ये त्वं माऽधो भूस्तिष्ठ गर्जितः१३
अलातं तिन्दुकस्येव मुहूर्तमपि हि ज्वल ।
मा तुषाग्निरिवानर्चिर्धूमायस्व जिजीविषुः ॥ १४
मुहूर्तं ज्वलितं श्रेयो न च धूमायितं चिरम् ।
मा ह स्म कस्यचिद्गेहे जनी राज्ञः खरीमृदुः ॥१५
कृत्वा मानुष्यकं कर्म सृत्वाऽऽजिं यावदुत्तमम् ।
धर्मस्यानृण्यमाप्नोति न चात्मानं विगर्हते ॥ १६
अलब्ध्वा यदि वा लब्ध्वा नानुशोचति पण्डितः ।
आनन्तर्यं चारभते न प्राणानां धनायते ॥ १७
उद्भावयस्व वीर्यं वा तां वा गच्छ ध्रुवां गतिम् ।
धर्मं पुत्राग्रतः कृत्वा किंनिमित्तं हि जीवसि १८
इष्टापूर्तं हि ते क्लीब कीर्तिश्च सकला हता ।
विच्छिन्नं भोगमूलं ते किंनिमित्तं हि जीवसि ॥१९
शत्रुर्निमज्जता ग्राह्यो जङ्घायां प्रपतिष्यता ।
विपरिच्छिन्नमूलोऽपि न विषीदेत्कथंचन ॥ २०

मन्युमती दैन्यवती । विभावरी कुपिता । विभावरी रजन्यां च वक्रयोषितीति विश्वः ॥ २ ॥ अनन्दन कुपुत्र । कुत्सार्थेऽत्र नञ् ॥ ५ ॥ क्लीबं निर्वीर्यं साधनं वाह्वादिकं यस्य स तथा ॥ ६ ॥ मा बीभरः मा पालय । प्रतिसंहर भयमिति शेषः ॥७॥ पराक्रमेः पराक्रमं कुरु ॥ १० ॥ विवदन् शत्रुजयार्थं अनेकान् पक्षानुद्भावयन्वा तूष्णींभूतोऽरेश्छिद्रं पश्येः । यथा व्योम्नि अपरिशङ्कितः शत्रोराधिक्याद्भयमपश्यन् श्येनस्तद्वत् ॥ ११ ॥ विश्रूयस्व ख्यातो भव । सामभेदौ जघन्यमध्यमौ । दानमधमो नीच उपायः । दण्डस्तूत्तमः । तत्राद्यत्रयकर्ता माभूः किंतु गर्जितो दण्डयितेव भवेत्यर्थः । ऊर्जित इति वा पाठः ॥ १३ ॥ कस्यचिद्राज्ञो गेहे खरी गर्दभीव मृदुः अकिञ्चित्करः जायत इति जनिः पुत्रो माभूत् ॥ १५ ॥ आजिं संग्रामम् ॥ १६ ॥ प्राणानां प्राणाः बलं तत्साध्यानां कार्याणाम् । आनन्तर्यं अविच्छेदेन कार्यधारामारभते । न धनायते धनं आत्मनो नेच्छति । तृष्णां त्यजतीत्यर्थः ॥ १७ ॥ ध्रुवां गतिं मरणम् । अग्रत इत्युपहासः । पृष्ठतः कृत्वेत्यर्थः ॥ १८ ॥ निमज्जता प्रपतिष्यता च शत्रुर्जङ्घायां ग्राह्यः । तेनैव सह निमज्जेत्पतेद्वेत्यर्थः । न विषीदेत् निरुद्यमो न भवेत् ॥ २० ॥

